Dvādaśadarśana Samīkṣaṇam

- By Dr. P. Sītārāma Hebbar.

South ~~[illegible]~~ Kanara Dt., 1980

(15)

Bill No. 5/07-08

52

2008-0511



श्रीः

परस्मै गायत्रीपरब्रह्मणे नमः

# द्वादशदर्शनसमीक्षणम्

ग्रन्थकर्ता

डा० पा० सीताराम हेब्बारः पी०एच्० डी०

अद्वैतवेदान्तविभागाध्यक्षः

श्रीसदाशिवकेन्द्रीयसंस्कृतविद्यापीठम्, पुरी

विघ्नो विशिष्टार्थदः



प्रकाशकः

गायत्री-आश्रमम्, सालिग्रामः

उडुपि तालूक्, दक्षिणकन्नड

कर्नाटक स्टेट्

१९८०



श्रीः

परस्मै गायत्रीपरब्रह्मणे नमः

# द्वादशदर्शनसमीक्षणम्

ग्रन्थकर्ता

डा० पा० सीताराम हेब्बारः पीएच्० डी०

अद्वैतवेदान्तविभागाध्यक्षः

श्रीसदाशिवकेन्द्रीयसंस्कृतविद्यापीठम्, पुरी

विघ्नो विशिष्टार्थदः



प्रकाशकः

गायत्री-आश्रमम्, सालिग्रामः

उडुपि तालूक्, दक्षिणकन्नड

कर्नाटक स्टेट्

१९८०



प्राप्तिस्थानम् :—

पा० श्रीनिवास हेब्बारः
गायत्री - आश्रमम्
सालिग्रामः, पोष्ट-पारम्पल्लि
उडुपि ताल्लूक्, दक्षिणकन्नड
कर्नाटक स्टेट्





प्रथमं संस्करणम् (१००० प्रतिलिपयः)



मू



मुद्रणस्थानम् :—

श्री नारायण प्रेस्, पुरी





श्रीः

परस्मै गायत्रीपरब्रह्मणे नमः

# A CRITICAL STUDY ON INDIAN PHILOSOPHY

*Author*

**Dr, P. S. Hebbar** ( *Ph. D.* )

Head of the Department of **ADWAITA VEDANTA**
Sree Sadasiva Kendreeya Samskrit Vidyapeetham.
*PURI-ORISSA.*



Publisher
Gayatree Ashramam
Saligrama, Karnataka

**1980**



Published by

P. Srinivasa Hebbar
Gayatree Ashramam,
Saligrama, Post.-Parmpali.
Dakshina Kannad, Karnataka State.



First Edition ( 1000 Copies )

Printed at

Sri Narayan Press.
PURI ORISSA



**ब्रह्मश्री श्रीनिवास हेब्बारः**

समग्रशास्त्रेषु कृतभूरिपरिश्रमाणाम् आस्तिकवराणां
कर्मानुष्ठानरतानां स्वाध्यायप्रवचनपराणां
नैय्यायिकानां श्रीमतां मत्पितृचरणानां
चरणकमलयोः सश्रद्धया
समर्पितोऽयं ग्रन्थकुसुमः ॥





कर्णाटकमुख्यमन्त्रिभिः संस्कृतानुरागवद्भिः

श्रीमद्भिः गुण्डूरावुमहाभागैः

ग्रन्थस्यास्य प्रकाशने प्रेषितोऽयं

शुभसन्देशः



ವಿಧಾನ ಸೌಧ, ಬೆಂಗಳೂರು-೫೬೦೦೦೧

ದಿನಾಂಕ 25ನೆಯ ಜುಲೈ, 80.

## ಸಂದೇಶ

"ದ್ವಾದಶ ದರ್ಶನ ಸಮೀಕ್ಷಣಂ" ಎಂಬ ಗ್ರಂಥವನ್ನು ತಾವು ಬರೆದು ಪ್ರಕಟಿಸುತ್ತಿರುವ ವಿಷಯವು ತಿಳಿದು ಮಾನ್ಯ ಮುಖ್ಯಮಂತ್ರಿಗಳಿಗೆ ಸಂತೋಷವಾಗಿದೆ. ಸಂಸ್ಕೃತ ಪ್ರಿಯರಿಗೂ, ವಿದ್ಯಾರ್ಥಿಗಳಿಗೂ ಈ ಗ್ರಂಥ ಉಪಯುಕ್ತವಾಗುವೆಂದು ಅವರು ಆಶಿಸುತ್ತಾರೆ. ಅದರ ಪ್ರಕಟಣೆಯು ನಿಮ್ಮ ಪ್ರಯತ್ನ ಯಶಸ್ವಿಯಾಗಲೆಂದು ಮುಖ್ಯಮಂತ್ರಿಗಳು ಹಾರೈಸುತ್ತಾರೆ. ಕನ್ನಡಿಗರಾದ ತಾವು ದೂರದ ಒರಿಸ್ಸಾ ರಾಜ್ಯದಲ್ಲಿ ಸಂಸ್ಕೃತ ಬೋಧನೆಯ ಕಾರ್ಯದಲ್ಲಿ ನಿರತರಾಗಿರುವುದು ಸಂತೋಷದ ವಿಚಾರ. ನಿಮ್ಮ ಕಾರ್ಯದಲ್ಲಿ ಅವರು ಸಕಲ ಯಶಸ್ಸು ಕೋರುತ್ತಾರೆ.

ಎಲ್. ಎಸ್. ಶೇಷಗಿರಿ ರಾವ್

(ಎಲ್. ಎಸ್. ಶೇಷಗಿರಿ ರಾವ್)
ಮುಖ್ಯಮಂತ್ರಿಯವರ ಪತ್ರಿಕಾ ಕಾರ್ಯದರ್ಶಿ.

ಡಾ: ಪಿ. ಸೀತಾರಾಮ ಹೆಬ್ಬಾರ,
ಶಿಕ್ಷಕರು,
ಸದಾಶಿವ ಕೇಂದ್ರೀಯ ಸಂಸ್ಕೃತ
ವಿದ್ಯಾಪೀಠಂ ಪುರಿ,
ಒರಿಸ್ಸಾ ರಾಜ್ಯ.



## प्राक्कथनम्

परमकारुणिकस्य श्रीमतो जगन्नाथस्यानुकम्पया ग्रन्थोऽयं प्रकाशितः सन् इदानीं सर्वेषां पुरतः विलसितः अस्ति । भारतीयदर्शनानि उत्कृष्टानि परिपूर्णानि वैशिष्ट्यपूर्णानि च सन्ति इत्यत्र नैव संशीतिलेशः । यतो हि एतानि दर्शनानि असाधारणैः ऋषिवरैः अनादिकालतः तत्त्वमाध्यमेन संरक्षितानि सन्तीति सर्वेषां विदितचरमेव ।

भारतीयदर्शनानि सर्वेभ्यः विदेशीयेभ्यः दर्शनेभ्यः प्रकारे विस्तारे एवं विचारपवित्रतायां च अन्यूनानि विद्यन्ते । भारते अजायन्त विविधानि सामाजिकपरिवर्तनानि धार्मिकान्युत्तानपतनानि वैदेशिकानामाक्रमणानि च तथापि भारतीयदर्शनपरम्परा अस्खलिता अविच्छिन्ना चेदानीमपि विराजते ! अत एव चिन्तितु शक्यते यत् भारतीयदर्शनानि कीदृशं पवित्रवत्त्वं भजन्ते इति ।

इयं भारतभूमिः सर्वधर्माणामपि मूलभूता तथा पाश्चात्यधर्माणामपि इयं भूः दत्ताऽदरा तिष्ठति । एवं सति भारतभूमिजैरस्माभिः चिन्तनीयं विद्यते यत् विदेशीयाः अत्र आगत्य, तैरत्र भारते निर्बन्धेन स्वकीयधर्मान् सुलभेन भारतीयानामस्माकमुपरि आच्छादयन्ति । अत्र हेतुत्वेन तिष्ठति यत् भारतीयानां कृते स्वकीयदर्शनस्य ज्ञानाभावः इति । तस्मात् भारतीयानां कृते स्वकीये दर्शने मनः प्रेरयितु एवमालोचना वर्धयितु ग्रन्थेऽस्मिन् मया प्रयत्नः कृतः ।

ग्रन्थोऽयं दर्शनज्ञानेच्छुकानां सहृदयानामेवं विद्यार्थिनां च महदुपकारत्वेन तिष्ठतीत्यत्र न सन्देहः । भारतेऽस्मिन् मुख्यत्वेन वर्तमानानां आस्तिकानां षड्दर्शनानि एवं नास्तिकत्वेन स्थितानां षड्दर्शनानि च तत्तद्दर्शनमाध्यमेन पुस्तिकायामस्यां शोभन्ते । तत्तद्दर्शनस्य विषयविचारावसरे अन्यदर्शनेषु स्वमतदार्ढ्याय विचारिताः वादप्रतिवादादयः

विशिष्य ग्रन्थेऽस्मिन् नावलोक्यन्ते। केवलं विभिन्नदर्शनस्य मूलस्वरूपं ज्ञातुमयं ग्रन्थः महानुपकरोति जिज्ञासूनामित्यन्यदेतत्।

विशेषेण विभिन्नदर्शनविभागीयानां छात्राणां सम्यक् स्वदर्शनस्य सिद्धान्तानां ज्ञानसम्पादनाय, एवं स्वदर्शनसिद्धान्तेन सह अन्य-दर्शनसिद्धान्तस्य तुलनात्मकमध्ययनं कर्तुम्, परीक्षायामपि प्रश्नोतर-माध्यमेन स्वदर्शनसिद्धान्तं सम्यक् उपस्थापयितुं च पुस्तकमेतद् महदुपकरोति इति विदितमेव भवति तत्र भवताम्। मल्लेख्यत्वेन पप्रथमतया प्रकाशितेऽस्मिन् ग्रन्थे ज्ञात्वा अज्ञात्वा वा भ्रमप्रमादादयः दोषाः सम्भवेयुरेव, तान् दोषान् हंसक्षीरन्यायेन सहृदयाः विद्वांसः स्वीकरिष्यन्ति, मां चानुगृह्णन्ति इत्यतः कृतार्थो भवामि।

पुरीक्षेत्रस्थितेन नारायणप्रेस्‌माध्यमेन ग्रन्थोऽयम् मुद्रितोऽस्ति। समीचीनया रीत्या ग्रन्थस्यास्य प्रकाशनं कृतवतां मुद्रणालयाधीक्षकानां श्रीमतां वंशीधररथमहोदयानां धन्यबादाः वितीर्यन्ते। अपि च उत्कल-संस्कृतगवेषणासमाजसम्पादकस्थाने वर्तमानानां श्रीमतां व्रजकिशोर-स्वाईँमहाभागानां कृतभूरिपरिश्रमेण ग्रन्थोऽयमस्मिन् क्षेत्रे प्रकाशितो भवति। एतदर्थमेते नमस्काराहाः भवन्ति। एवं परोक्षापरोक्षेण ग्रन्थस्यास्य प्रकाशने साहाय्यं कृतवतां सर्वेषां सहृदयानां कृते अयं जनः साञ्जलिबद्धः कृतज्ञतावाकं व्याहरति॥

पुरी
शा० सं० १९०३
भाद्रपदशुक्लचतुर्थी
१३-९-८०

इति विद्वज्जनविधेयः
पा० सीताराम हेब्बारः



## अभिनन्दनम्

डा० हरिहर झा M. A., Ph D. D. Litt.
प्राचार्यः
श्रीसदाशीवकेन्द्रीयसंस्कृतविद्यापीठम्
पुरी ओरिस्सा

किं सत्यं किं च मूल्यं प्रप्रथमम् इत्यादि चिन्तनमयं दर्शनशास्त्रं शनैः शनैः विभिन्नानि जटिलानि च स्वरुपाणि प्राप्नोत् । तदीयं भिन्नं भिन्नं पक्षमाश्रित्य परः सहस्रं चिन्तकाः नानाग्रन्थान् प्रणिन्युः । अथापि तदीयं दुर्बोधत्वे शैथिल्यं न जगाम ।

प्रस्तुतोऽयं ग्रन्थः भारतीयदर्शनस्य प्रमुखानां वादानां प्रत्यभिज्ञापने निर्वचने च नितरामुपकारकः इति निःसन्दिग्धम् । छात्रवत्सलः- नानाशास्त्रपारङ्गतः **डा० पा० सीताराम हेब्बार** महोदयः सरलरीत्या छात्राणां बोधनार्थं परिक्षोत्तरणार्थं च ग्रन्थरत्नमिदं विरच्य महान्तं साधुवादमर्हति । प्रसारितोऽयं ग्रन्थः अनुसन्धेत्सूनां सर्वेषां छात्राणां विभिन्नेषु दर्शनेषु तुलनात्मकमध्ययनमाध्यमेन महत्स्थाने विलसति । सर्वाणि च दर्शनानि अतिसंक्षेपेण स्वात्मानमत्र उपस्थाप्यन्ते । स्वदर्शने विस्तरत्वेन प्रतिपादितानां सूक्ष्मातिसूक्ष्माणां गहनात्मकानां सिद्धान्तानां सरलसंस्कृतभाषया सारल्येन च सङ्कलीकृत्य दर्शनानां मणिमाला इयं सुशोभा विराजते । भगवान् कृपालुः जगन्नाथः ग्रन्थकर्त्रे उत्तरोत्तरमुत्साहं वर्धयित्वा, एवमेव अनेकाः दुर्लभविषयात्मकाः ग्रन्थाः प्रकाशनीयाः इत्याशास्महे ॥

पुरी

९-९-८०

**डा० हरिहर झा**



# संकेतविवरणम्

| | |
|---|---|
| अ० व० | अनिवृद्धवृत्तिः |
| ईशा० | ईशवास्योपनिषत् |
| ऋ० सं० | ऋग्वेदसंहिता |
| छा० उ० | छान्दोग्योपनिषत् |
| जै० सू० | जैमिनिसूत्रम् |
| तै० सं० | तैतिरीयसंहिता |
| तै० ब्रा० | तैतिरीयब्राह्मणम् |
| तै० उ० | तैतिरीयोपनिषत् |
| न्या० सू० | न्यायसूत्रम् |
| न्या०रत्ना०सि० वि० | न्यायरत्नावलीसिद्धिविवेक. |
| पञ्च० | पञ्चदशी |
| बृ० उ० | बृहदारण्यकोपनिषत् |
| बृ० वा० | बृहदारण्यकवार्तिकम् |
| बृ० उ० शा० भा० | बृहदारण्यकोपनिषच्छांकरभाष्यम् |
| ब्र० सू० शा० भा० | ब्रह्मसूत्रशाङ्करभाष्यम् |
| ब्र० सू० | ब्रह्मसूत्रम् |
| भग० | भगवद्गीता |
| मानसो० | मानसोल्लासः |
| मी० सू० | मीमांसासूत्रम् |
| मु० उ० | मुण्डकोपनिषत् |
| यो० सू० | योगसूत्रम् |
| यो० भा० वा० टी० | योगभाष्यवार्तिकटीका |
| सा० कां० | सांख्यकारिका |
| सा० सू० | सांख्यसूत्रम् |
| श्वे० उ० | श्वेताश्वतरोपनिषत् |



# विषयानुक्रमणिका

| विषयाः | पृष्ठम् | विषयाः | पृष्ठम् |
|---|---|---|---|

५) पञ्चमोऽध्यायः — मीमांसादर्शनम् — ६२-७८



६) षष्ठोऽध्यायः — वेदान्तदर्शनम् — ७९-१०३



७) सप्तमोऽध्यायः — चार्वाकदर्शनम् — १०४-११३

८) अष्टमोऽध्यायः — जैनदर्शनम् ११४-१२७



बौद्धदर्शनम्—९, १०, ११, १२, अध्यायाः १२८-१६०



९) नवमोऽध्यायः — सौत्रान्तिकदर्शनम् १४८-१५०



दशमोऽध्यायः — योगाचारदर्शनम्



एकादशोऽध्यायः — वैभाषिकदर्शनम् १५१-१५४



द्वादशोऽध्यायः — माध्यमिकदर्शनम् १५५-१५८







परस्मै गायत्रीपरब्रह्मणे नमः

# द्वादशदर्शनसमीक्षणम्

## ०) उपोद्घातः—

भारतदेशे उत्पन्नानामस्माकं मतानुरोधेन पृथक् पृथक् एकं दर्शनं भवति । दर्शनं आस्तिक – नास्तिकभेदेन द्वेधा व्यवह्रियते । तत्र नास्तिकदर्शनत्वेन-चार्वाक, जैन, बौद्धाः । बौद्धेषु वैभाषिक-सौत्रान्तिक-योगाचार-माध्यमिकाः इति चत्वारः प्रभेदाः इत्येते षट् मतप्रवर्तकाः वेदप्रामाण्यं नाङ्गीकारिष्यन्ति इत्यतः एतेषां नास्तिकमते अन्तर्भावः । आस्तिकमतानि षट्,तानि च– न्याय-वैशेषिक-सांख्य-योग–पूर्वमीमांसोत्तरमीमांसाः । उत्तरमीमांसा नाम वेदान्तः । एते षण्मतप्रवर्त्तकाः वेदस्य प्रामाण्यमभ्युपगम्य वेदोक्तेश्वरस्वरूपप्रतिपादने एव स्वमतमुपस्थापयन्ति इत्यतः एतेषामास्तिकत्वं सिद्धम् ।

विहितेषु द्वादशदर्शनेषु "स्वधर्मे निधनं श्रेयः" (भग० ३-३४) इतिवत् सम्प्रदायविदामस्माकं आस्तिकत्वं प्रधानमिति निश्चित्य अस्तिकमतानि षट् शास्त्राणि प्रथमतः विचारार्थं प्रस्तूयन्ते । ब्रह्मज्ञानानन्तरं ब्रह्मस्वरूपत्वेन वर्त्तमानः तुच्छः प्रपञ्चः यथा निरस्यते तथा अस्वीकरणात्मकतुच्छत्वेन वर्त्तमानानि षट् नास्तिकदर्शनानि अन्ते विचार्यन्ते । चतुर्दशलोकानां मध्ये कर्मलोकत्वेन ज्ञानलोकत्वेन च यः मुख्यत्वेनोच्यते भूलोकः तथा द्वादशदर्शनसमुच्चयात्मकेऽस्मिन् ग्रन्थे "तत्वमसि" (छा० उ० ६-८-७) इति श्रुतिश्रवणसमनन्तरमेव भवति यस्य साधनचतुष्टयसम्पन्नस्य पुरुषस्य यः आत्मसाक्षात्कारः,तत्प्रतिपादनात्मकं वेदान्तशास्त्रमत्र मुख्यत्वेन जीवन्मुक्त्यात्मकमोक्षौपयिकत्वेनोपदिश्यते ।

विचारार्थं स्वीकृतेषु षट् आस्तिकदर्शनेषु सरणिरियं प्रस्तुता—
'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थ-विप्रकर्षात्" (मी० सू० ३-३-१८)

इति मीमांसान्यायानुसारं श्रुतिलिङ्गवाक्यपदेन अत्र स्वीकृतेषु आस्तिकषड्दर्शनेषु वाक्यपदेन न्यायवैशेषिकशास्त्रे, लिङ्गं नाम स्मृतिः, लिंग्यते स्मर्य्यते इति व्युत्पत्त्या तेन स्मृतिपदेन सांख्ययोगशास्त्रे, श्रुतिपदेन मीमांसावेदान्तशास्त्रे चाभिहिते भवतः इति कृत्वा प्रथमतः न्यायशास्त्रस्य विचारः प्रस्तूयते ।





**************************
* प्रथमोऽध्यायः - न्यायदर्शनम् *
**************************

## १-१) न्यायशास्त्रम् :-

न्यायदर्शनस्य प्रवर्त्तकः महर्षिगौतमः । अस्य दर्शनस्य "अक्षपाददर्शनम्" इति नामान्तरम् । तत्र कारणं तु एकस्मिन् समये भगवान् व्यासः न्यायमतं दूषयित्वा खण्डयामास । तस्मोद्धेतोः महर्षिगौतमः एवं प्रतिज्ञां कृतवान् यदहं अनेन नेत्रेण व्यासस्य मुखदर्शनं न करोमि इति । अनन्तरं व्यासः गौतमस्य अनुनय-विनयेन प्रीतो भूत्वा त मुक्तकण्ठेन प्रशंसां कृतवान् । तदानीं गौतमः स्वयोगबलेन स्वपादे नेत्रमेकं निर्माय तेन नेत्रेण व्यासं दृष्टवान् । तस्मात् गौतमस्य अक्षपादः इति लोके प्रथा अभूत् ।

दर्शनेऽस्मिन् वैशेषिकदर्शनानुसारं पदार्थानां तत्वज्ञानेन निःश्रेयस-सिद्धिः भविष्यतीति अभ्युपगम्यते । न्यायदर्शने षोडशपदार्थानां मेयत्वमभ्युपगम्यते । तेषां षोडशानां नामानि – प्रमाणप्रमेयसंशय-प्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासछल-जातिनिग्रहस्थानानि इति । एतेषां पदार्थानां यथार्थज्ञानेन मुक्तिस्सिध्यति इत्येतेषां राद्धान्तः ।

## २) न्यायशास्त्रपरिचयः :-

अस्मिन् न्यायशास्त्रे पंच अध्यायाः सन्ति । प्रत्येकस्मिन् अध्याये आह्निकद्वयं भविष्यति । प्रथमाध्यायस्य प्रथमे आह्निके षोडशपदार्थेषु प्रमाणविचारादारभ्य निर्णयपर्यन्तं यावत् नव पदार्थाः

विचारयिष्यन्ते । द्वितीये तु वादादारभ्य निग्रहस्थानपर्यन्तं सप्त विषयाः विचारार्थं प्रस्तूयन्ते । द्वियीयाध्यायस्य प्रथमे आह्निके संशयस्य परीक्षणं, तस्य कारणं एवं तस्य स्वरूपविषये विचारः, अन्यच्च प्रत्यक्षानुमानोपमानशब्दप्रमाणानां प्रामाणिकत्वं च विचार्यते । द्वितीये अर्थापत्यादीनामन्तर्भावं कुत्र इति स्पष्टीकृतम् । तृतीयाध्यायस्य प्रथमे आत्मनः स्वरूपम्, शरीरस्य लक्षणम्, इन्द्रियाणां भेदः, तेषां प्रयोजनमित्येते चत्वारः प्रमेयविषयाः परीक्षिताः । द्वितीये तु बुद्धेः एवं मनसः परीक्षणं कृतम् । चतुर्थाध्यायस्य प्रथमे आह्निके प्रवृत्तिदोषः, प्रेत्यभावः, फलम्, दुःखम्, एवमपवर्गस्य विचारः प्रस्तुतः । एवं तृतीयाध्यायस्य आह्निकद्वये चतुर्थाध्यायस्य प्रथमाह्निके च केवलं प्रमेयविषयाणामेव परीक्षणं कृतम् । प्रमेयभूताः द्वादश भवन्ति । ते यथा– आत्मा, शरीरम् इन्द्रियाणि, अर्थः, बुद्धिः, मनः, प्रवृत्तिः, दोषः, प्रेत्यभावः, फलम्, दुःखम्, अपवर्गः इति । चतुर्थस्य द्वितीये आह्निके दोषाणां निमित्तानि यानि तेषां निरूपणं एवं परमाणोः निरवयवत्वं च साधितम् । पञ्चमाध्यायस्य प्रथमे आह्निके जातेः निरूपणं कृतम् । द्वितीये निग्रहस्थानस्य विचारः प्रतिपादितः । एवं पञ्चाध्यायात्मकशरीरयुक्तस्य न्यायशास्त्रस्य परिचयः ।

### ३) प्रमाणम् :-

षोडशपदार्थानां मध्ये एतद् भवति प्रथमम् । गौतमस्य सिद्धान्तोऽयम्– "मायाधीना मेयसिद्धि" इति । अयं भावः– प्रमेयभूतस्य अर्थस्य सिद्धिः प्रमाणाधीना इति । अर्थात् यथार्थानुभवस्य यत् कारणं, एवं यथार्थानुभवप्रमायाः नित्यसम्बन्धाश्रयत्वेन यदस्ति तत् प्रमाणमिति गीयते । तस्मादेव प्रमाणं न्यायशास्त्रे भिन्नपदार्थत्वेन स्वीक्रियते । शास्त्रेऽस्मिन् प्रतितन्त्रसिद्धान्तः उपस्थाप्यते । स तु समानतन्त्रेण सिद्धः एवं परतन्त्रेण असिद्धः इति कथ्यते । अत्र गौतमवाक्यम्– "समानतन्त्रसिद्धः परतन्त्रासिद्धः प्रतितन्त्रसिद्धान्तः" (न्या० सू० १-१-२९) इति । ईश्वरप्रामाण्यविषये गौतमस्य वचनम् - मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात् ( न्या० सू० २-१-६७ ) इति भवति । अनेन एतद् सिद्धं यत् नैयायिकानामभिमतत्वेन ईश्वरे यत्प्रामाण्यं तत् गौतमेन अपि अभ्युपगतं भवतीति ।

प्रमितिज्ञानस्य कारणं प्रमाणं भवति । तच्चतुर्विधम्–प्रत्यक्षानुमानोपमानशब्दभेदात् । इन्द्रियैः विषयसंसर्गेण यत् ज्ञानं जन्यते तत् प्रत्यक्षमित्युच्यते । यथा घटपटादयः । अनुमितेः कारणं यत् तदनुमानमथवा लिङ्गपरामर्श इत्याम्नायते । प्रमाणेऽस्मिन् येन व्याप्तिबलेन अर्थावबोधो भवति तस्य लिङ्गमिति नाम । उदाहरणम्- पर्वतो वह्निमान्, धूमवत्त्वात् इति । अतिदेशवाक्यस्मरणेन सह यस्य सदृशवस्तुनः ज्ञानं भविष्यति तत् उपमानप्रमाणेन सिध्यति । उक्तं च— "उपमितिकरणमुपमानम्" इति । तत्र दृष्टान्तः - गोसदृशो गवय इति । आप्तवाक्यं शब्दः । यत्र प्रत्यक्षानुमाने स्वार्थवत्त्वं न भजते तादृशं ज्ञानं शब्दप्रमाणेनैव लक्ष्यते । यथा – "विषं भुंक्ष्व" इत्यादयः ।

## ४) प्रमेयः -

यथार्थज्ञाने भासमानत्वेन यः पदार्थः अस्ति सः प्रमेय इति कथ्यते । प्रमेयभूताः द्वादश इत्येतेषां राद्धान्तः । विषयोऽयं पूर्वमेव प्रतिपादितः । आत्मा ज्ञानाश्रयत्वेन कथितः । आत्मा तु जीवात्मपरमात्मरूपेण द्विविधः । परमात्मा सर्वज्ञः एकश्च । जीवाः प्रतिशरीरं भिन्नत्वात् जीवात्मानः अनेकाः । व्यापकत्वेन नित्यत्वेन च उभावपि प्रतिपादितौ स्तः । आत्मनः सुखदुःखोपभोगाय साधनभूतं यत् तच्छरीरमित्युच्यते । शरीरसंयुक्तं ज्ञानकारणं यदतीन्द्रियं पदार्थत्वेन कथितं तदिन्द्रियमिति वक्ष्यते । ज्ञानं बुद्धिरिति व्यवह्रियते । सुखदुःखादीनां ज्ञानसम्पादनाय साधनभूतस्य इन्द्रियस्य नाम मनः इति । एतन्मनः नानाप्रकारत्वेन वर्तमानं सत् अणुत्वेन नित्यत्वेन चाभिधीयते ।

## ५) संशयः :-

अनिश्चयात्मकं ज्ञानं संशय इति कथ्यते । सः त्रिविधः - साधारणधर्मनिमित्तः, असाधारणधर्मनिमित्तः, विप्रतिपत्तिधर्मनिमित्तश्चेति । तत्र प्रथमस्योदाहरणम्–स्थाणुर्वा पुरुषो वेति । यतो ह्यत्र पुरुषस्योन्नतत्वमेव स्थाणोः स्थूलत्वं च साधारणधर्मतया भासते । द्वितीयस्योदाहरणम् - पृथिवी नित्यानित्ये इति । असाधारणधर्मगतभूतगन्धज्ञानं विना पृथिवी

निष्पन्ना एव न भवति । विप्रतिपत्तिनिमित्तसंशयस्योदाहरणम्- शब्दः नित्योऽनित्यो वा इति। केचन वदन्ति शब्दः नित्य इति । अन्ये भणन्ति शब्दः अनित्यः इति । एतद्वयवाक्यश्रवणसमनन्तरं मध्यस्थस्य सन्देहः उदेति - शब्दस्वरूपं किमिति ।

## ६) प्रयोजनम् :-

यदुद्दिश्य यस्मिन् कार्ये मनुष्यः प्रवृत्तो भवति , तत् प्रयोजनमिति भण्यते । तथाहि - ज्ञानमुद्दिश्य मनुष्यः अध्ययने प्रवृत्तो भवति, अथवा स्वर्गमुद्दिश्य यागानुष्ठाने, एवं मोक्षमुद्दिश्य शमदमाद्यनुष्ठाने अधिकृतो भवति इत्यादि । प्रयोजनं द्विधा विभज्यते- दृष्टमदृष्टं चेति । दृष्टफलम् – अवघातात् तुषविमोकः । स्वर्गफलमदृष्टमिति व्यवहारः । "प्रयोजनलक्षणे गौतमवचनम् - यमर्थमधिकृत्य प्रवर्त्तते तत् प्रयोजनम्' (न्या० सू० १-२-२८) इति । एतदेव भङ्ग्यन्तरेण शबरस्वामिना उक्तम् – प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तते इति ।

## ७) दृष्टान्तः :-

व्याप्तिज्ञापनस्थलं दृष्टान्तः इति व्यवहारः । यत्र यत्र धूमः तत्र तत्र वह्निः इति व्याप्तिः । अस्योदाहरणत्वेन महानसः व्याप्तिज्ञापनत्वेन स्वीक्रियते । अतः महानसं व्याप्तिज्ञापनस्थलं भवति । तथा च गौतमोक्तिः - "लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः" (न्या० सू० २-२-२५३) इति । स च दृष्टान्तः साधर्म्यवैधर्म्यरूपेण द्विविधः । धूमेनाग्निसाधने यः महानसदृष्टान्तः भवति सः साधर्म्यभूतः, अस्यैवानुमानस्य जलम् सरोवरः वैधर्म्यदृष्टान्तः इति विवेचनम् ।

## ८) सिद्धान्तः :-

यः पदार्थः प्रमाणेन सिद्धो भवति सः सिद्धान्तः । सिद्धान्तः चतुर्विधः - सर्वतन्त्रः, प्रतितन्त्रः, अभ्युपगमः, अधिकरणसिद्धान्तश्चेति । सर्वशास्त्रसिद्धसिद्धान्तानां सर्वतन्त्रसिद्धान्त इति व्यवहारः । उदाहरणम्- पञ्च ज्ञानेन्द्रियाणि सन्ति । इमानि सकलशास्त्रकारैः अभ्युपगतत्वात्

नस्त्यत्र विरोधः। प्रतितन्त्रसिद्धान्तस्तु- शब्दः अनित्य इति। मतमेतत् न्यायशास्त्रकारस्यैव भवति, नतु मीमांसकस्य। अन्यच्च प्रकृत्या जगदुत्पत्तिरिति, सिद्धान्तोऽयं सांख्ययोगदार्शनिकानामेव भवति न त्वन्यस्य। अभ्युपगमसिद्धान्तश्चायं भवति यत् यद्यपि स्वाभिप्रेत-सिद्धान्तस्य विरोधः अथापि कतिपयक्षणपर्यन्तं विरोधात्मकः सः सिद्धान्तः स्वसिद्धान्तत्वेन स्वीक्रियिते। यथा- शब्दः गुणात्वेन स्वीक्रियते न तु द्रव्यत्वेन। द्रव्यत्वेनाभ्युपगम्यमानेऽपि सः शब्दः अनित्यः इति सिद्धान्तयन्ति। अधिकरणसिद्धान्तः इत्थं भविष्यति- क्षित्यादिकं सकर्तृकम् इत्याद्यनुमानप्रमाणेन कर्ता ईश्वरः इति सिद्धः। स एव ईश्वरः अधिकरण-त्वेन सर्वज्ञः, सर्वेश्वरः, सर्वशक्तिमान् इति च सिध्यति।

## ९) अवयवः :-

परार्थानुमानान्तर्गतावयवानामन्यतमस्य अवयवः इति कथनम्। परार्थानुमाने पञ्चावयवाक्यानि सन्ति। तानि यथा- प्रतिज्ञाहेतू-दाहरणोपनयनिगमनानि इति। तत्र- साध्यनिर्देशः प्रतिज्ञा। लिङ्गस्य प्रतिपादकं वाक्यं हेतुः। - व्याप्तिसाधकदृष्टान्तवचनमुदाहरणम्। 'साध्यसाधर्म्यात्तद्धर्मभावो दृष्टान्तः उदाहरणम्'' [न्या०सू० १-१-३६] इति गौतमवचनम्। हेतोः उपसंहारवचनम् उपनयः इति कथ्यते। पक्षे साध्यभूतस्य उपसंहारवचनस्य निगमनमिति व्यवहारः।

## १०) तर्कः :-

व्याप्यारोपेण व्यापकारोपकस्तर्कः इति तर्कस्य लक्षणम्। यथा - धूमः अग्निव्याप्यः एवं अग्निः धूमव्यापकः। अर्थात् धूमाभावः अग्नेः अभावस्य व्यापकः भवति, एवमग्नेरभावः धूमाभावस्य व्याप्यश्च इति धूमाग्न्योः अभावः परस्परविपरीतत्वेन दरीदृश्यते। अर्थममुं सूत्रकारः प्रकारान्तरेण वदति-"अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः" (न्या० सू० २-२-८०) इति।

## ११) निर्णयः :-

उपर्युक्ततर्कविषये खण्डनमण्डनात्मकद्वारा यस्य समीचीनार्थस्य निश्चयः भवति सः निर्णयः इति अभ्युपगम्यते। अत्र सूत्रकारवचनम् - "विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः" ( न्या० सू० १-२-८१ ) इति। अयं चतुर्विधः– साक्षात्कृतिः, अनुमितिः, उपमितिः, शब्दः इति।

## १२) वादः :-

यः तर्केण अथवा प्रमाणद्वारा स्वपक्षसाधनमेवं परपक्षखण्डनं यस्यां शास्त्रचर्चायामुपयुज्यते, किंच स्वीकृतः सिद्धान्तः अविरुद्धः एवं पञ्चावयववाक्यैः उत्पन्नश्च भविष्यति सः वादः इत्युच्यते। तत्र प्रमाणम्–"प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः" (न्या० सू० १-२-१) इति गौतमवाक्यम्।

## १३ जल्पः -

"यथोक्तोपपन्नः छलजातिविग्रहस्थानसाधनोपालम्भे जल्पः" (न्या० सू० १–२–२) इति सूत्रकारवचनात् परपक्षखण्डनेन स्वपक्षसिध्यनन्तरमपि छलजातिनिग्रहस्थानानां प्रयोगः यत्र कृतो भवति सः जल्प इति भण्यते।

## १४) वितण्डा -

"स प्रतिपक्षस्थापनाहीनो वितण्डा" ( न्या० सू० १-२-३ ) इति वचनात् पूर्वोक्तः यः जल्पः यदा स्वपक्षस्थापनाहीनो भवति स एव वितण्डावाद इति व्यवह्रियते। अस्मिन् वादे वैतण्डिकः स्वपक्षस्थापनं न करोति अपितु केवलं परपक्षखण्डने एवास्य मुख्या प्रवृत्तिः।

## १५) हेत्वाभासः -

यत्र साध्यस्य साधकत्वेन हेतुः न भवति अथापि सः हेतुः हेतुवत् भासते इति अयं हेत्वाभासः इत्युच्यते। असद्धेतुरिति अस्य नामान्तरम्।

हेत्वाभासः पञ्चविधः – सव्यभिचारः, विरुद्धः, प्रकरणसमः, कालातीतः इति ते भविष्यन्ति । यः हेतुः अन्यत्र व्यभिचरति सः सव्यभिचारः इति । अस्यापरं नाम अनैकान्तिक इति । अस्योदाहरणम् - पर्वतो वह्निमान्, प्रमेयत्वात् । प्रमेयत्वं जलेऽपि सत्वात् हेतुरन्यत्र व्यभिचरति । यः हेतुः साध्याभावेन व्याप्तः सः विरुद्धः इति कथ्यते । यथा – शब्दः नित्यः, कृतकत्वात् । अत्र कृतकत्वमिति हेतुः नित्यत्वाभावानित्यत्वेन सह व्याप्तः । यत्र यत्र कृतकत्वं तत्र तत्र नित्यत्वमित्यतः हेतुरयं विरुद्धः । यस्य प्रतिवादिनः अन्यः हेतुः विद्यते सः प्रकरणसमः इति व्यवहारः । अस्य अन्यन्नाम सत्प्रतिपक्षः इति । अयं भावः – यत्र वादी स्वपक्षसाधनाय साधकहेतुप्रयोगं करोति, तदा तस्मिन् स्थले प्रयुज्यमानः हेतुः प्रकरणसमः इति भण्यते । उदाहरणम् - वादिनः पक्षे शब्दः नित्यः, यतः शब्दे अनित्यधर्मोपलब्ध्यभावात् इति । प्रतिवादिपक्षे शब्दः अनित्यः, यतः शब्दे नित्यधर्मोपलब्ध्यभावात् इति हेत्वन्तर-प्रतिपादनेन गृहीतः पक्षः विचारेण समाप्तिर्न भवति । अतोऽयं हेतुः प्रकरणसमः । यः हेतुः साध्यसमानः सन् स्वयमसिद्धः सः साध्यसमः । दृष्टान्तः – शब्दः गुणः, चक्षुषा दृश्यमानत्वात् इति । अत्र शब्दे चाक्षुषत्वहेतुरसिद्धः । अतः हेतुरयं साध्यसमानत्वेन असिद्धो भवतीति कृत्वा साध्यसमः हेत्वाभासः इति गीयते । यस्य साध्याभावः प्रमाणान्तरेण निश्चितः सः कालातीतः अथवा कालात्ययापदिष्ट इति निश्चीयते । अस्य अन्यन्नाम बाधित इति । यथा - अग्निः शीतलः प्रमाश्रयत्वात् । अत्र साध्यं शीतलत्वं, अस्याभावात्मकमुष्णत्वं प्रत्यक्षप्रमाणेनैव सिद्धत्वात् प्रयोक्ता यदा वाक्यप्रयोगं करोति तदानीमेव सः हेतु बाधितो भवतीति पञ्च हेत्वाभासाः ।

## १६) छलम् :-

अस्य लक्षणं महर्षिणा गौतमेन एवं भणितम्- "वचनविघातोऽर्थ-विकल्पोपपत्त्या छलम्" ( न्या० सू० १.२-१० ) इति । छलमेतत् त्रिविधम् - वाक्छलम्, सामान्यछलम्, उपचारछलमिति । वाक्छल-

स्वरूपमेवम् – अस्मिन् ब्राह्मणसविधे नवकम्बलमस्ति इत्येकेन नवीनं कम्बलं ब्राह्मणसकाशे अस्तीत्यभिप्रेत्य कृते वाक्यप्रयोगे सति अन्येन अन्यथार्थं स्वीकृत्य अस्मिन् दरिद्रे कथं वा नव संख्यकानि कम्बलानि भवितुं शक्यन्ते इति वाक्यप्रयोगेण यद्यपि स्वाभिमतत्वेन नवसंख्याकं विनापि, प्रयोक्तुर्वचनं भञ्जयितुं छलप्रयोगं करोति । तात्पर्यवृत्तिव्यत्ययेन अर्थान्तरकल्पनात्मकं यद् भवति तत् सामान्यछलमित्युच्यते । यथा – ब्राह्मणे भवति विद्यायाः सम्भवः इत्यभिप्रायेण एकः विद्यावत्वं साधयति ब्राह्मणे । प्रतिवादिना चोच्यते – वाक्यमेतद् कुतः चोद्यते बहवः मूर्खाः ब्राह्मणत्वेन विराजन्ते इति । लक्षणावृत्तिव्यत्ययेन या अर्थान्तरकल्पना तस्याः उपचारछलमिति व्यवहारः । यथा – मञ्चाः क्रोशन्ति इति । मञ्चमध्ये उपविष्टेषु दशजनेषु अन्यतमेन कृताक्रोशेन वादिना मञ्चाः क्रोशन्ति इति कृते व्यवहारे प्रतिवादी आक्षिपति कथमचेतनः मञ्चः क्रन्दनं कर्तुं प्रभवति इति शक्यार्थाभिप्रायेण तन्मतं खण्डयति । भवति चैवं छलस्वरूपम् ।

## १७) जातिः :-

जातेः स्वरूपं गौतमेनैवं कृतम् "साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः" ( न्या० सू० १-२-१७ ) इति । साधर्म्यवैधर्म्याभ्यां यस्य साध्यस्य अनुपपत्तिः सा जातिरित्युच्यते । वादी साधर्म्योदाहरणेन साध्यस्योपपत्तिं करोति, तस्मिन् समये प्रतिवादी वैधर्म्योदाहरणेन साध्यस्यानुपपत्तिं प्रदर्शयति यदा तदा सा जातिरित्यभिधीयते । जातिः चतुर्विंशतिप्रकारात्मिका भवति । यथा - साधर्म्यसमः, वैधर्म्यसमः, उत्कर्षसमः, अपकर्षसमः, वर्ण्यसमः, अवर्ण्यसमः, साध्यसमः, विकल्पसमः, प्राप्तिसमः, अप्राप्तिसमः, प्रसङ्गसमः, प्रतिदृष्टान्तसमः, अनुपपत्तिसमः, संशयसमः, प्रकरणसमः, हेतुसमः , अर्थापत्तिसमः, अविशेषसमः, उपपत्तिसमः, उपलब्धिसमः, अनुपलब्धिसमः, नित्यसमः, अनित्यसमः तथा कार्यसमः इति । एते क्रमानुसारं विचार्यन्ते—

१) साधर्म्यसमः— कार्यत्वात् शब्दः अनित्यः, घटवत् इति

वादिनः अनुमानप्रकारः । प्रतिवादिनः जात्युत्तरमेतद् भवति यत् अमूर्तत्व-कारणेन शब्दः नित्यः, आकाशवत् इति । अयं भावः – येन प्रकारेण घटगतं यत् कृतकत्वं तेन साधर्म्येण शब्दस्यानित्यत्वं सिद्धम् इति वादिना उक्ते सति एवमेव नित्ये आकाशे वर्तमानं यदमूर्तत्वं तस्य साधर्म्यं शब्दे भविष्यतीत्यतः शब्दः नित्यः इति कुतो न भवतीति प्रतिवादी साधर्म्यसमजात्युत्तरं ददाति इति ।

२) वैधर्म्यसमः— उक्तस्थले एव अनित्यघटस्य वैधर्म्यरूपं यदनित्यत्वं तदमूर्तत्वं शब्दे वर्तत इति शब्दः नित्यः इति कुतः न साध्यते ? एतत्प्रकारात्मकमुत्तरं वैधर्म्यसमः इत्युच्यते ।

३) उत्कर्षसमः— येन प्रकारेण उक्तस्थले कार्यं भविष्यति, घटसाधर्म्येण यदि शब्दस्यानित्यत्वं साध्यते तदा घटसदृशशब्देन शब्देनाऽपि मूर्तत्वेन भाव्यम् । किन्तु शब्दः मूर्तः न भवति, तस्मात् शब्दः अनित्योऽपि न भवति । अत्र शब्दे मूर्तत्वधर्मान्तरस्य आपादनं भवति ।

४) अपकर्षसमः – उक्तस्थले यदि घटसदृशकार्यत्वेन शब्दे अनित्यत्वसाधनं क्रियते, तदा घटः केन प्रकारेण श्रोत्रेन्द्रियविषयो न भवति तेनैव प्रकारेण शब्दोऽपि अश्रावणः इति भवेत् । अत्र शब्दे श्रावणत्वस्य अपकर्षः प्रदर्श्यते ।

५) वर्ण्यसमः— वर्णनीयहेतुत्वेन यः धर्मः अस्ति सः वर्णः इत्युच्यते । पूर्वोक्तस्थले एव शब्दे भवति यत्कार्यत्वं तत् तालुकण्ठोष्ठादिव्यापार-जन्यं भवति । एवं घटे यत्कार्यत्वं तत्कुम्भकारव्यापारजन्यम् । अतः दृष्टान्तदार्ष्टान्तिकयोः भेदनिर्धारणात् दृष्टान्तेन शब्दे अनित्यत्व-साधनं कर्तुं न शक्यते ।

६) अवर्ण्यसमः— दृष्टान्तेन सिद्धः यः धर्मः सः अवर्ण्यः । यथा– यत्प्रकारात्मकं कार्यत्वं घटे अस्ति तत् शब्दे नास्तीति सः अवर्ण्यसमः ।

७) विकल्पसमः— पूर्वोक्तस्थले कार्यत्वहेतुना शब्दस्यानित्यत्वं साधितम् । तन्न समीचीनम् । यतो हि कार्यं नाम प्रकारद्वयं भवति–

मृदुत्वेन कठोरत्वेनेति । एवं कोऽपि घटः कार्यत्वेन अनित्यः, शब्दः नित्यत्वेनापि भवितुं योग्यः इति व्यवहारः विकल्पसमः ।

८) साध्यसमः— यथा - घटसमानत्वेन यदि शब्दः अनित्यः तर्हि शब्दसदृशत्वेन घटोऽपि श्रोत्रेन्द्रियविषयत्वेन ग्राह्यः भवेदिति ।

९) प्राप्तिसमः—प्राप्तिर्नाम सम्बन्धः, अर्थात् साध्यसम्बद्धत्वेन यः हेतुः सः साध्य-साधको भवति । यदि भवेत् साध्यहेत्वोः परस्पर-सम्बद्धकारणात् अविशेषत्वेन साध्यत्वेन कः ? साधनत्वेन कः ? एतादृशं निश्चयात्मकज्ञानमेव न सिध्यति यत्र सः प्राप्तिसमः ।

१०) अप्राप्तिसमः— यथा - यदि हेतुसाध्येन असम्बद्धः भवति तर्हि साध्यस्य यत्साधकं तत् केन प्रकारेण सिध्यति इत्येवञ्जातीयकः।

११) प्रसङ्गसमः— शब्दे अनित्यत्वं किं साधनत्वेन अस्ति ? तस्मिन् अनित्यत्वेऽपि भवति साधनान्तरम् इत्येवंप्रकारात्मकः व्यवहारस्य प्रसङ्गसमः इत्युच्यते ।

१२) प्रतिदृष्टान्तसमः—विरुद्धदृष्टान्तद्वारा विरुद्धसाध्यसाधनस्य नाम प्रतिदृष्टान्तसमः । यथा – प्रयत्नेन विभाव्यमानत्वस्य सत्वात् शब्दः अनित्यः घटवत् इति वादिनः कथनेन प्रतिवादी वदति - प्रयत्नेन विभाव्यमानत्वं भवति इति हेतोः आकाशवत् शब्दः नित्यः, कूपादि-खननप्रयत्नेन आकाशोऽपि उत्पद्यमानो भवति । अतः आकाशदृष्टान्तः शब्दनित्यत्वविरुद्धत्वेन नित्यत्वेन सिद्धीकरणमेव प्रतिदृष्टान्तसमः ।

१३) अनुपपत्तिसमः— यथा- शब्दनित्यत्वसाधने कार्यत्वं हेतुः, हेतुरयं शब्दोत्पत्तेः पूर्वमेवास्ति । यतः "धर्मिणं विहाय धर्माः न तिष्ठन्ति" । अतः कार्यत्वधर्मेण साध्यं यदनित्यत्वं तत् शब्दे नास्ति । तस्मात् शब्दः नित्यः, नित्यत्वं तत् नोत्पद्यते इति हेतोः शब्दः अनित्यः । यथा अजातशत्रुवत् ।

१४) संशयसमः—केन प्रकारेण कार्यत्वसाधर्म्येण घटवत् शब्द-स्यानित्यत्वं मन्यते तेनैव ऐन्द्रियकत्वसाधर्म्येण नित्यघटसमानशब्दस्य नित्यत्वं कथं वा न मन्यते इति संशयसमः ।

१५) प्रकरणसमः – यत्र संशयसमः तस्मिन् शब्दस्य नित्यत्वानित्यत्वे समानत्वेन तिष्ठतः । किन्तु अस्मिन् विपरीतानुमानस्य पूर्वानुमानबाधकत्वेन प्रदर्शनं क्रियते ।

१६) हेतुसमः—साध्यपूर्वकालिकत्वेन अथवा उत्तरकालिकत्वेन समकालिकत्वेन वा हेतुः तिष्ठति । यदि हेतुः साध्यपूर्वकालिकत्वेन चिन्त्यते तर्हि हेतुसमये साध्याभावस्य सत्वात् हेतुः कस्य साधकः भवति ? यदि साध्योत्तरकालत्वेन हेतुः तर्हि साध्यभूतः पदार्थः पूर्वमेव सिद्धः, पुनरपि हेतुरयं कस्य साधनं करोति ? समकालिकत्वेन हेतुरस्ति इति वक्तव्ये सति सव्येतरविषाणवत् साध्यसाधनत्वमेव न सिध्येत । यथा – सिंहिणः सकाशात् एकस्मिन् काले उत्पन्नशिशुद्वयस्य परस्परसाध्यसाधनत्वं न भवति तथा हेतुसाध्ययोः समकालिकत्वकारणात् तयोः परस्परसाध्यसाधकभावः न भवति ।

१७) अर्थापत्तिसमः— यत्र अर्थापत्तिशब्देन अर्थापतेः आभासः गृह्यते तत्र अर्थापत्तिसमः दोषः भवति । यथा– शब्दः अनित्यः, अनया प्रतिज्ञया सिद्धं भवति यत् शब्दाभिन्नः शब्दः नित्यः । अनेन घटोऽपि नित्यः भवति यद्येवं दृष्टान्तेन तर्हि शब्दानित्यत्वं किमात्मकम् इति यत्र धीः जायते तत्रायं दोषः ।

१८) अविशेषसमः– यथा शब्दघटयोः कार्यत्वरूपसमानधर्मत्वेन विशेषतायाः अभावात् द्वावपि अनित्यौ भवतः तथा प्रमेयत्वरूपसमानधर्मेण सकलपदार्थेषु अविशेषत्वकथनात् नित्यानित्यौ द्वावपि तौ एकत्वं भजतः ।

१९) उपपत्तिसमः— यथा – कार्यत्वं यत् तदुत्पद्यते इति शब्दे अनित्यत्वं साध्यते एवमेव निरवयवत्वात् शब्दे नित्यत्वसिद्धिः कथं न स्यात् इत्येवंप्रकारात्मकः उपपत्तिसमः ।

२०) उपलब्धिसमः— यथा – वादी - धूमव्यापकः अग्निः इति धूमहेतुना अग्नेः साधनं करोति, प्रतिवादी वदति – धूमं विना

आलोकादिकारणान्तरेण अग्ने: सिद्धि: भवत्येव । सत्येवं धूमेनैव अग्निसिद्धिरिति कुत: भण्यते इत्येवञ्जातीयक: ।

२१) अनुपलब्धिसम: — कार्यत्वहेतुना शब्दस्य अनित्यत्वं साधितेऽपि प्रतिवादी भणति शब्द: न कृतक:, यत: उच्चारणात् प्रागेव स: अस्ति । केवलावरणकारणेन शब्दस्योपलब्धिर्न भवति ।

२२) नित्यसम:— शब्दे य: अनित्यत्वरूपधर्म: स: नित्य: उत अनित्य: । यदि नित्य: तर्हि धर्मिणां विना धर्मस्थिति: न भवति । अनेन धर्मी अपि नित्यत्वेनास्ति इत्यवश्यं चिन्तनीयम् । अथवा यदि अनित्य: धर्म: तर्हि अनित्यत्वमेव अनित्यत्वस्य सत्येवं कथं शब्द: नित्य: इत्युच्यते ।

२३) अनित्यसम:— यदि कृतकत्वात् घटसाधर्म्येण शब्दस्यानित्यत्वं चिन्त्यते तदा स: प्रमेयत्वकारणात् घटसाधर्म्येण सकलपदार्थानामपि अनित्यत्वं प्रसज्येत इत्याकारक: अनित्यसम: ।

२४) कार्यसम:— शब्द: अनित्य: इति वादिन: कथनानुसारं प्रतिवादी वदति कार्यं जन्यज्ञाप्यत्वेन द्विप्रकारात्मकम् । अस्यां स्थितौ ज्ञाप्यरूपकार्यकारणेन शब्द: नित्य: इति भवितुं शक्यते । तस्मात् कार्यत्वहेतु: अनित्यत्वसाधक: न भवति इति कार्यसमस्वरूपम् ।

प्रतिपादितासु एतासु जातिषु साधर्म्यसमप्रकरणसमकार्यसमसंशयसमादिषु दूषणमेकविधत्वेऽपि पुन: केवलं दूषणोद्भावनप्रकार: भिन्न: इति प्रदर्शयितुं पृथगत्र ते विचारिता: सन्ति इत्यवगन्तव्यम् ।

## १८) निग्रहस्थानम् :-

वादी अथवा प्रतिवादी यस्मिन् स्थाने येन प्रतिपादनेन स्वपक्षपराजितत्वं मन्यते तत्स्थानं निग्रहस्थानमिति कथ्यते । निग्रहस्थानं द्वाविंशतिभेदेन उपन्यस्तं भवति न्यायशास्त्रे । तानि यथा- प्रतिज्ञाहानि:, प्रतिज्ञान्तरम्, प्रतिज्ञाविरोध:, प्रतिज्ञासंन्यास:, हेत्वन्तरम्, अर्थान्तरम्,

निरर्थकम्, अविज्ञातार्थम्, अपार्थकम्, अप्राप्तकालम्, न्यूनम्, अधिकम्, पुनरुक्तम्, अननुभाषणम्, अज्ञानम्, अप्रतिभा, विक्षेपः, मतानुज्ञा, पर्यनुयोज्योपेक्षणम्, निरनुयोज्यानुयोगः, अपसिद्धान्तः, हेत्वाभासः इति भवन्ति । एतेषां स्वरूपं यथा–

१) प्रतिज्ञाहानि — प्रतिज्ञायाः त्यागः प्रतिज्ञाहानिः । यथा- वादिना उक्तम्- इन्द्रियविषयत्वात् शब्दः अनित्यः इति । तदा प्रतिवादिनः कथनम्- शब्दः इन्द्रियविषयत्वेऽपि नित्यः इति । तदा वादिना एतदुच्यते नित्यत्वेनापि शब्दः तिष्टति इत्युच्यते तर्हि प्रतिज्ञात्यागात्मिका नाम प्रतिज्ञाहानिः तत्र सिद्धा । अनेन कारणेन सः निग्रहीतः भवति ।

२) प्रतिज्ञान्तरम्— पूर्ववत् शब्दे अनित्यत्वप्रतिज्ञां कृत्वा यदा तत्र अन्येन दोषः प्रदर्श्यते तदा तेन प्रतिज्ञा कृता भवति । एतदेव प्रतिज्ञान्तरमित्युच्यते । यथा- सर्वगतं सामान्यं नित्यः किन्तु असर्वगतः शब्दः अनित्यः इति ।

३) प्रतिज्ञाविरोधः— प्रतिज्ञाहेतुवाक्ययोः विरोधः एव प्रतिज्ञाविरोधः । यथा- द्रव्यं गुणाभिन्नत्वेन उपलब्धिमत्वात् द्रव्यं गुणाऽभिन्नम् । अनेन हेतुवाक्येन प्रतिज्ञावाक्यमत्यन्तं विरुद्धं भवति ।

४) प्रतिज्ञासंन्यासः—पूर्ववत् प्रतिज्ञायाः अपलापः नाम प्रतिज्ञासंन्यासः । यथा- शब्दे अनित्यप्रतिज्ञां कृत्वा, अन्येन आक्षिप्तदोषवशेन केनोच्यते शब्दः अनित्यः इति यदा व्यवहारं करोति तदा प्रतिज्ञायाः अपलापः भवति ।

५) हेत्वन्तरम् - बाह्येन्द्रियप्रत्यक्षत्वात् शब्दः अनित्यः । अनेन हेतुना सामान्ये व्यभिचारः इति अन्येन प्रदर्श्यते यदा तदा व्यभिचार-निरसनाय हेतौ सामान्यवत्वे सति इति दलप्रयोगं दीयते तत् हेत्वन्तरमित्युच्यते ।

६) अर्थान्तरम्— कस्यापि हेतुनः प्रयोगानन्तरं हेतुशब्दस्य



निर्वचनमथवा व्युत्पत्तिकथनम् अर्थान्तरमित्युच्यते । अत्र गौतमवचनन्- 'प्रकृतादर्थादप्रतिसम्बद्धार्थमर्थान्तरम्" (न्या० सू० ५-२-७) इति ।

७) निरर्थकम्—निरर्थकशब्दप्रयोगकरणमेव निरर्थात्मकनिग्रहस्थानम् । यथा - क ख इत्यनेन ज ब समानवत् क च ट इत्यादयः शब्दाः नित्या इति ।

८) अविज्ञातार्थम्— कठिनात्मकत्वेन अप्रतिसिद्धत्वेन अथवा अन्यभाषास्थत्वेन शब्दः अस्तीति कृत्वा त्रिवारमुक्तवापि मध्यस्थस्य तस्य शब्दस्य अर्थावबोधो न भवति तदानीं तस्योक्तेः अविज्ञातार्थः इत्युच्यते ।

९) अपार्थकम्— आकांक्षायोग्यतारहिता परस्परासम्बद्धा या उक्तिः तस्याः नाम अपार्थकः इति । यथा- दश दाडिमानि, षडपूपाः, अग्निना सिञ्चति इत्यादयः ।

१०) अप्राप्तकालम्— यत्र प्रतिज्ञाहेत्वादिन्यायावयवानां विपरीतप्रयोगः क्रियते तत्र अप्राप्तकालः इत्युच्यते । यथा- महानससमत्वेन धूमः अस्तीति कृत्वा वाक्यप्रयोगं करोति - अग्निमान् पर्वतः इति ।

११) न्यूनम्—प्रतिज्ञाद्यवयवेषु कस्याप्यवयवस्य अप्रस्तुतीकरणं न्यूनमित्युच्यते ।

१२) अधिकम्— यत्र एकेनोदाहरणेन साध्यसिद्धिर्भवति तत्र यत् अन्यदुदाहरणमुपन्यस्तं भवति चेत् तदधिकमित्युच्यते ।

१३) पुनरुक्तम्—एकमेव वाक्यं तैश्शब्दैरेव अथवा पर्यायवाचकैः शब्दैः पुनः पुनः कथनं नाम पुनरुक्तम् ।

१४) अननुभाषणम्—वदतु भवान् इति वारं वारं त्रिवारं मध्यस्थेन चोदितोऽपि पुनः न किमप्युच्यते तदननुभाषणमिति उच्यते ।

१५) अज्ञानम्— वादिप्रतिवादिनोर्मध्ये अन्यतमेन उक्तार्थः मध्यस्थेन ज्ञाते सत्यपि वादिप्रतिवादिनोः मध्ये अन्यतमेन सोऽर्थः न ज्ञातपूर्वः भवति तदा अज्ञानमिति व्यवहारः ।

१६) अप्रतिभा— अन्येनोक्तं प्रश्नं ज्ञात्वाऽपि अस्योत्तरदाने यदा बुद्धिः न स्फुरति सा अवस्था अप्रतिभा इति कथ्यते ।

१७) विक्षेपः—स्वयमयोग्यत्वेन प्रमाणितो भूत्वा कार्यान्तर-व्याजेन स्वस्य पृथक्करणात्मिका या चेष्टा तस्याः विक्षेपः इति नाम ।

१८) मतानुज्ञा— यदा अन्यः अन्यं प्रति वदति- त्वं चोरः इति । अस्योत्तरत्वेन तेनापि उच्यते- त्वमपि चौरः इति अत्र स्वस्मिन् चोरत्वपरिहारमकृत्वा अन्यस्मिन् चौरत्वकथनं स्वचौरत्वे अनुमानं भवति इति तदा मतानुज्ञा इति गीयते ।

१९) पर्यनुयोज्योपेक्षणम्—वस्तुतः सति निग्रहस्थाने त्वमिदानीं निगृहीतोऽसि इत्यननुवदनं पर्यनुयोज्योपेक्षणम् ।

२०)निरनुयोज्यानुयोगः- वस्तुतः असति निग्रहस्थाने त्वमिदानीं निगृहीतौऽसि इत्यात्मकं कथनं निरनुयोज्यानुयोगः भवति ।

२१) अपसिद्धान्तः— यं सिद्धान्तमाधारीकृत्य तस्मिन् किमपि उच्यते, तं विहाय मध्ये अन्यकथाकथनं नाम अपसिद्धान्तः ।

२२) हेत्वाभासः— "हेत्वाभासाश्च यथोक्ताः (न्या० सू० ५-२-२५) इति सूत्रानुसारं हेत्वाभासविचारे पञ्चविधहेत्वाभासानां विशदीकरणं कृतम् । इति निग्रहस्थानविवेकः ।

## १९) शास्त्रस्यास्य न्यायपदौचित्यम् :-

अत्रायं प्रश्नः उदेति यत् षोडशपदार्थप्रतिपादनात्मकमेतच्छास्त्रं कथं न्यायशास्त्रमित्युच्यते । पञ्चावयवैः युक्तं परार्थानुमानमेव न्याय इति पदेन शास्त्रकाराः व्यवहरन्ति इति । अस्य समाधानमेतद् भवितुं शक्यते यत् "प्राधान्येन व्यपदेशाः भवन्ति" इति न्यायेन अस्यापि न्यायशास्त्रमिति व्यवहारः । सकलविद्यानामनुग्राहकत्वेन एवं सकल-कर्मानुष्ठानानां साधनत्वेन यत्कारणमस्ति येन विवक्षितार्थस्य प्राप्तिः भवति प्रधानभूतस्य तादृशस्य 'न्यायशास्त्रम्' इति संज्ञा । न्यायवार्तिके उद्योतकराचार्याणां वाक्यं भवति-

"सोऽयं परमो न्यायः विप्रतिपन्नपुरुषं प्रति प्रतिपादकत्वात्" इति ।

अत्र परमन्यायः इति पदेन न्यायशास्त्रस्य व्यवहारः कृतः। तस्मात् शास्त्रस्यास्य नाम न्यायशास्त्रमिति साम्प्रतम्।

## २०) षोडशपदार्थाः मोक्षोपयोगिनः :-

न्यायशास्त्रे प्रतिपादिताः षोडशपदार्थाः मोक्षे उपयोगिनः भवन्ति। आत्यन्तिकदुःखनिवृत्तिरेव मोक्षः इत्युच्यते न्यायशास्त्रे। गौतमेनाप्यभिहितम्–

"दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः" (न्या० सू० १ १-२)

इति। सूत्रार्थः सरलः। तथा च प्रमेयभूततत्वानां ज्ञानसम्पादनमेव प्रत्यक्षादि षट् प्रमाणानां मुख्यं प्रयोजनम्। इन्द्रीयातीतसूक्ष्मविषयाणां ज्ञानं अनुमानाधीनं भवति। एवं स्थूलसूक्ष्मशरीरज्ञानसम्पादनद्वारा शरीरोत्पत्तौ यः कारणत्वेन अस्ति दोषः तन्नाशपूर्वकत्वेन जन्मनः प्रवृत्तिः न भवति। जन्माभावे दुःखं नानुभूयते इत्यतः दोषनाशात्मिका या दशा भवति सा मोक्षत्वेन कथ्यते इति शास्त्रेऽस्मिन् निश्चयः॥





## द्वितीयोऽध्यायः - वैशेषिकदर्शनम्

### २-१) वैशेषिकं शास्त्रम् :-

दर्शनस्यास्य प्रणेता भगवान् कणादः। अयं तु स्वजीवननिर्वाहं कुर्वन् ज्ञानभण्डारात्मकमेतच्छास्त्रं रचितवान्। एतच्छास्त्रं न केवलं भारतदेशे, अपितु सर्वत्र प्रपञ्चे विराजते। महात्मा कणादः प्रकृत्या स्वयं दरिद्रः सन् क्षेत्रे पतितान्नकणान् लक्षीकृत्य स्वजीवननिर्वाहं कृतवान् इत्यतः अस्य शास्त्रस्य "कणादशास्त्रम्" इति व्यवहारः। अन्यदपि नाम शास्त्रस्यास्य भवति - वैशेषिकदर्शनमिति। यतः अस्मिन् दर्शने विशेषः पदार्थत्वेन स्वीक्रियते। कणादात् ऋते केनापि पदार्थत्वेन विशेषः न स्वीकृतः। दर्शनस्यास्य अपरं नाम औलूक्यदर्शनम् इति। यतः कणादस्य पितुर्नाम भवति उलूकऋषिरिति। उलूकस्यापत्यं औलूक्यम्। गौतममतानुसारं कणादेनापि षोडश प्रमाणप्रमेयादिपदार्थाः स्वीक्रियन्ते। एतेषां तत्त्वज्ञानेन मोक्षः इति। द्रव्यगुणादीनामत्यन्तं सुव्यवस्थितं रूपम्, एतेषां साधर्म्यवैधर्म्याभ्यां विशिष्टं वर्णनं यथा कणादेन कृतं तथा अन्यस्मिन् दर्शने न मिलति। अनेनापि विशेषेण अस्य दर्शनस्य वैशेषिकदर्शनम् इति संज्ञा।

### २) वैशेषिकशास्त्रपरिचयः :-

महर्षिः कणादः मुख्यत्वेन पदार्थद्वयमङ्गीकरोति- प्रत्यक्षमनुमानं चेति। अनुपलब्धिप्रमाणं प्रत्येक्षऽन्तर्भावति, एवं शेषत्वेन अवशिस्टानि सर्वाणि प्रमाणानि अनुमाने अन्तर्भावं भजन्ते इति दृढीकरोति। यावत्पर्यन्तं पदार्थानां विवेचनं पूर्णतया न भवति तावत्पर्यन्तं कः

पदार्थः व्याप्यत्वेनास्ति, कः व्यापकत्वेन अस्ति इति पदार्थानां विवेचनं सम्यक् न भवति । अतः "अथातो धर्मजिज्ञासा" (मी० सू० १-१-१) इत्यादि सूत्रविवरणावसरे कणादः द्रव्यगुणकर्मसामान्यविशेषसमवायाः इति षट् पदार्थानां विवेचनं विस्तरतया दशसु अध्यायेषु कृतवान् । प्रत्येकस्मिन् अध्याये आह्निकद्वयं वर्तते । ऋषिणा अनेन प्रत्येकस्मिन् दिने आह्निकमेकं लिखितमिति कृत्वा अस्यापि आह्निकम् इति नाम । प्रथमाध्यायस्य प्रथमे आह्निके – जातिमत् द्रव्यम् , गुणः, एवं कर्म इत्यादीनां विचारः कृतः । द्वितीये तु जातिः एवं विशेषस्य च निरूपणं कृतम् । द्वितीयस्य प्रथमे- भूताना विशेषप्रकारः, द्वितीये- दिक्कालयोः विचारः प्रस्तुतः । तृतीयस्य प्रथमे - आत्मनः विचारः, द्वितीये - अन्तःकरणस्य विचारः कृतः । चतुर्थस्य प्रथमे - शरीरस्य प्रतिपादनम्, द्वितीये - शरीरविवेचनोपयोगाय यदस्ति परमाणुकारणत्वं तस्य विचारः विस्तृतः । पञ्चमस्य प्रथमे – शारीरककर्मणां प्रस्तावः, द्वितीये – मानसिककर्मणां विचारः विवेचितः । षष्ठस्य प्रथमे - दानप्रतिग्रहयोः स्वरूपम्,द्वितीये आश्रमचतुष्टयस्य स्वरूपमेवं आश्रमधर्माः प्रतिपादिताः । सप्तमस्य प्रथमे – बुद्धिविचारः, तस्याः निरपेक्षस्वरूपम्, रसादिगुणानां विवेचनम्, द्वितीये-सापेक्षबुद्धेः द्वित्वम्, परत्वापरत्वपृथक्त्यादिगुणानामेवं समवायस्य च विवेचनं सम्पादितम् । अष्टमाध्यायस्य प्रथम-द्वितीयाह्निकयोः प्रत्यक्षप्रमाणस्य सविकल्प-निर्विकल्पकात्मकं विवेचनं प्रस्तुतम् । नवमाध्यायस्य प्रथमे – अभावविचारः, द्वितीये- हेतुविचारः कृतः । दशमाध्यायस्य प्रथमद्वितीययोः अनुमानभेदानां विचारः सम्यक् प्रतिपादितः । भवति चैवं वैशेषिकशास्त्रस्य दशाध्याय-विचारः ।

### ३) ग्रन्थरचनप्रक्रिया :-

ग्रन्थरचनेऽस्मिन् कणादेन प्रक्रियारूपः त्रिविधः स्वीकृतः– उद्देश्यम्, लक्षणम्, परीक्षा चेति । एवं प्रत्येकविषयप्रतिपादनावसरे प्रथमतः विषयस्य उद्देश्यम् प्रतिपाद्य अनन्तरं तस्य लक्षणमुपन्यस्य

अन्ते विषयपरीक्षां करोति । उद्देशस्य तात्पर्यमेवं भवति यत् नाममात्रेण वस्तुसंकीर्तनम् । यथा - द्रव्यगुणादयः समवायान्ताः षट् पदार्थाः इति एवं पदार्थानां नाममात्रेण निर्देशनस्य उद्देश्यम् इति व्यवहारः । पदार्थानां सामान्यज्ञानसम्पादनमुद्देशस्य फलं भवति ।

असाधारणधर्मस्य नाम लक्षणमिति । यथा - गन्धवती पृथिवी इत्यत्र पृथीव्याः असाधारणधर्मः यः गन्धः तेन लक्षणेन पृथिवी साधिता भवति । अनेन एतदपि प्रयोजनं यत् इयं पृथिवी इतरपदार्थेभ्यः भिन्ना इति ज्ञानसम्पादनम् । लक्षितलक्ष्यैकपदार्थे लक्षणं युक्तं भवति वा न वेति यः विचारः उदेति सा परीक्षा इत्युच्यते । अस्याः परीक्षायाः फलं दोषपरिहारात्मकं भवति । वैशेषिकशास्त्रप्रणाली तर्कसंग्रहेण सम्यगधीता भवति ।

## ४) पदार्थस्वरूपम् :-

पदार्थः द्विविधः - भावः अभावश्च । भावपदार्थे – द्रव्यगुणकर्मसामान्यविशेषसमवायाः षट् स्वीक्रियन्ते । अभावः - प्रागभावप्रध्वंसाभावात्यन्यन्ताभावान्योन्याभावाः इति चत्वारः । प्रश्नोऽयमुदेति यत् पदार्थानां विवेचनसमये उद्देश्यादिमार्गत्रयमनुसृतम्, विभागः त्यक्तः, सत्येवं कथं पदार्थसिद्धिर्भवतीति । तस्य समाधानमेवं भवितुं युज्यते - उद्देश्यं नाम सामान्यविशेषरूपेण प्रकारद्वयम् । द्रव्यादिषट्पदार्थाः, पृथिव्यादि नव द्रव्याणि सामान्योद्देश्यत्वेन स्वीक्रियन्ते । रसादिचतुर्विंशतिगुणाः विशेषोद्देश्यत्वेन अम्नायन्ते । विशेषोद्देश्ये विभागस्यान्तर्भाव इति कृत्वा विभागस्य पुनरुक्तेअपेक्षा नास्ति ।

## ५) पदार्थानां विचारः :-

शास्त्रेऽस्मिन् द्रव्यगुणकर्मादीनां स्वरूपविचारे यः क्रमः स्वीकृतः तत्रापि कारणमस्ति । किं नाम तत् ? द्रव्यं सकलपदार्थानां आश्रयभूतं भवति । धर्मभूतद्रव्यज्ञानं विना धर्मज्ञानं न सिध्यति । द्रव्यादिपदार्थाः षट्षष्ठि (६६) प्रकारेण भिन्नाः सन्ति । द्रव्यभिन्नगुणाः पञ्च एतेषां

सर्वेषां साक्षात् परम्परया वा आश्रमभूतं द्रव्यमेव भवति । गुणः एवं कर्म च साक्षात् आश्रयद्रव्यं स्वीकरोति । गुणकर्मणोः विद्यमानः गुणत्वं कर्मत्वं च परम्परया आश्रयद्रव्यं स्वीकरोति । साक्षात् द्रव्याश्रयत्वेन विशेषस्यापि गणनं क्रियते । समवायस्तु एकत्र साक्षात्, अपरत्र गुणक्रियादिषु परम्पराश्रयत्वेन द्रव्यमन्वेति । तस्मात् द्रव्यस्य प्रथमं स्थानं दत्तम् । द्वितीयं स्थानं गुणस्य, यतः गुणः द्रव्यधर्मः भवति । सर्वद्रव्येषु कर्म न भवतीति कृत्वा कर्म तृतीयत्वेन व्यवह्रियते । यतः आकाशकालादिगात्मसु, विभुद्रव्येषु कर्म न तिष्ठति । तत्रापि यदि तेषां कर्मणः स्थितिरभ्युपगम्यते तर्हि एतेषां व्यापकत्वमेव न सिध्यति ।

प्रश्नोऽयमुपस्थितो भवति - कणादेन "षडैव पदार्थाः" इति कुतः स्वीकृताः, षट्पदार्थातिरिक्तत्वेनाभावोऽपि एकः पदार्थः अस्ति । अभ्युपगमे सति सप्त पदार्थाः इति वाक्यप्रयोगे कणादस्यापत्तिः स्यात्- इति यन्मत तन्न समीचानम् । यतो हि कणादः भावपदार्थानां विचारमेव करोति न त्वभावम् । यद्यपि अभावः पदार्थान्तरभूतः तथापि निषेधविषयक-बुद्धावन्वेति । निषेधविषयस्तु बुद्धिविषयत्वं न प्राप्नोति । अतः कणादेन ये भावपदार्थाः सन्ति तेषां ग्रहणेनैव षडेव पदार्थाः इत्युक्तम् । अथ चेयं शङ्का उदेति-"षडेव"इत्यत्र वर्तमानैवकारेण पदार्थान्तरस्य निषेधः अभिप्रेतः । निषेधस्तु अभावः इत्युच्यते । यदि निषेधं विना सत्यत्व मङ्गीक्रियते तर्हि तस्य निषेधः न भवति । यदि असदित्युच्यते तदानीमपि वन्ध्यापुत्रः इत्यादिनिषेधसमानत्वेन व्यर्थः एव स्यात् । अस्यामवस्थायां पदार्थान्तरः निषेधार्थः षडेवेत्यत्र वर्तमानैवकारस्य प्रयोगः कृतः, एवं सति सः प्रयोगः व्यर्थः इति चेत - न । अत्र वर्तमानैवकारेण न तु केवलं सप्तमनिषेधः, किन्तु भावभूतस्य सप्तमपदार्थस्य निषेधः क्रियते । केवलसप्तमेन अन्धकारः स्वीक्रियते, केवलभावपदार्थेन शक्तिः, एवं सादृश्यपदार्थः प्रतीतिमापद्यते । एतेषां व्यावृत्त्यर्थं षडैव इत्युक्तम् ।

## ६) द्रव्यत्वविचारः :-

द्रव्यलक्षणं तु कणादेन एवं सम्पादितम्- आकाशेकमलमित्यत्र

समवायसम्बन्धेन भाव:, पृथिवी गन्धवती इत्यत्र गन्धे समवायसम्बन्धे यत् न तिष्ठति तद्द्रव्यम् इति । द्रव्यत्वं चातुर्विध्यमस्ति- अकाशसमवेततत्वम्, कमलसमवेततत्वम्, गन्धासमवेततत्वम्, नित्यत्वम् चेति । यदि लक्षणे गन्धासमवेततत्वं न दीयते तर्हि द्रव्यगुणाकर्मसु वर्तमाना या सत्ता नाम जातिः सा आकाशे अतिव्याप्त्या व्यभिचरति । यत: सा सत्ता गगनकमलेऽपि समवेता सती नित्या च भवति, किन्तु गन्धासमवेततत्वरूपेण न तिष्ठति । अत: लक्षणकोटिषु एतदवश्य भवितव्यम् ।

## ७) गुणत्वविचार: :-

गुणत्वलक्षणमेवं भवति - समवायिकारणासमवेतत्वे सति असमवायिकारणभिन्नसमवेतत्वेन साक्षात् व्यापकसत्ताका या सा गुणत्वेन कथ्यते । द्रव्यगुणकर्मसु वर्तमाना या सत्ता नाम जाति: तस्या: साक्षात् व्याप्यत्वं द्रव्यत्वादिरूपेषु त्रिषु अपि अस्ति । यदि लक्षणे साक्षात् व्यापकसत्ताका इति पदं न दीयते तर्हि ज्ञानत्वेऽतिव्याप्तिः । यतः समवायिकारणं यद्द्रव्यं तस्मिन् ज्ञानत्वं समवायसम्बन्धेन न तिष्ठति । अतः समवायिकारणासमवेतत्वं ज्ञानत्वमिति सिद्धम् । असमवायिकारणाद्भिन्नं यद् ज्ञानं तस्मिन् समवायसम्बन्ध: तिष्ठति इत्यतः तत्रातिव्याप्तिः । किन्तु ज्ञानत्वे साक्षात् व्यापकसत्ताकत्वं न भवति इत्यत: उक्तविशेषणेन तत्रातिव्याप्तिपरिहारः :

असमवायिकारणभिन्नसमवेतत्वविशेषणं कर्मत्वे गुणलक्षणातिव्याप्तिपरिहाराय दत्त वतते । यथा - कर्मत्वं साक्षात् सत्ताव्याप्यं सत् समवायिकारणासमवेतत्वमपि भवति । कर्मत्वे एतल्लक्षणपरिहाराय पदस्यास्य उपयोग: । समवायिकारणासमवेतत्वेन द्रव्ये गतगुणलक्षणस्य परिहारः क्रियते । द्रव्यत्वं जाति: साक्षात् सत्ताव्याप्यत्वेन असमवायिकारणाद्भिन्ने द्रव्ये समवायसम्बन्धेन अस्ति । उक्तविशेषणेन समवायिकारणं यद्द्रव्यं तस्मिन् गुणत्वं समवायसम्बन्धेन युक्तं न भवतीति गुणत्वविचार: ।

## ८) कर्मत्वविचारः :-

या नित्यपदार्थे समवायसम्बन्धेन न तिष्ठति, एवं साक्षात् व्यापकसत्ताका या जातिः तत्कर्मत्वमित्युच्यते । नित्यद्रव्येषु आकाशपरमाण्वादिषु समवायसम्बन्धेन उक्तलक्षणं तिष्ठतीति अतिव्याप्तिदोषपरिहाराय नित्यासमवेतत्वमिति पदं दत्तम् । एवमेव जलादिपरमाणुषु वर्तमानः यः रूपादिगुणः, एवं परमात्मनि वर्तमानं नित्यज्ञानं एतेषु गुणत्वजातिः समवायसम्बन्धेन तिष्ठति । एतत्परिहाराय नित्यासमवेतत्वमिति विशेषणम् । यतः कर्म कस्यापि द्रव्यस्य नित्यं न भवति । अतः कर्मत्वजातिः नित्यासमवेता सती साक्षात् व्यापकसत्ताका भवति ।

## ९) सामान्यविचारः :-

सामान्यस्य लक्षणमेवमभिहितम् कणादेन – नित्यत्वे सति अनेकेषु समवायसम्बन्धेन वर्तमानत्वं सामान्यवत्त्वमिति । यथा – गोत्वादयः । सामान्यं द्विविधम् – परमपरं चेति । द्रव्यगुणकर्मसु समवायसम्बन्धेन वर्तमाना या सत्ता सा परसामान्यरूपा भवति । द्रव्यत्वादियु अल्पदेशत्वेन वर्तमाना अपरसामान्या इति कथ्यते ।

## १०) विशेषविचारः :-

अन्योन्याभावविरोधी सामान्यभिन्नसमवेतसमवायसम्बन्धेन नित्यद्रव्येषु वर्तमानत्वं विशेषवत्त्वमिति । द्रव्यगुणकर्माणि सामान्यं विना न तिष्ठन्ति इति कृत्वा तद्व्यावृत्तये सामान्यभिन्नमिति विशेषणम् । द्रव्यत्वादयः सामान्ययुक्ताः भविष्यन्ति तथा समवेतविशेषणन समवायस्य व्यावृत्तिः भवति । अर्थात् न कुत्रापि समवायः समवायसम्बन्धेन तिष्ठति । अन्योन्याभावविरोधी इति दलेन समवायान्तरस्वीकरणेन अनवस्थादोषः प्रसज्यते । दोषोऽयं विशेषे न भवति, यतः यदि विशेषत्वं रूपं सामान्येन स्वीक्रियते तदा विशेषे विशेषत्वाभावः इति सिध्यति । सत्येवं रूपहानिदोषः स्यात् । एतदर्थं न्यायसिद्धान्तमुक्तावलीकारः

एवं लिखति—

व्यक्तेरभेदस्तुल्यत्वं संकरोऽथानवस्थितिः ।
रूपहानिरसम्बन्धो जातिबाधकसंग्रहः ॥



इति । आम्नातं चैतत् विशेषणलक्षणम् ।

## ११) समवायविचारः :-

गुणगुणिनोः, जातिव्यक्त्योः क्रियाक्रियावतोः यः सम्बन्धः सः समवाय इति कथ्यते ।

एवं षण्णां पदार्थानां विवेचनं संक्षेपेण कृतम् । एवमेव विस्तरेण पृथिव्यादि नव द्रव्याणां, शब्दादिचतुर्विंशतिगुणानां, आदानादि पञ्च कर्मणां विशेषेण विचारः, एवं तेषां स्वरूपं सामान्यज्ञानं च तर्कसंग्रहेण बोद्धव्यम् ।

## १२) द्वित्वादिसंख्याविचारः :-

वैशेषिकाणां विशेषाग्रहः द्वित्वादिसंख्यासु भवति । विषयेऽस्मिन् आचार्यः लिखति—

द्वित्वे च पाकजोत्पत्तौ विभागे च विभागजे ।
यस्य न स्खलिता प्रज्ञा तं वै वैशेषिकं विदुः ॥

इति । अन्यच्च—

आदाविन्द्रियसन्निकर्षघटनादेकत्वसामान्यधी-
रेकत्वोभयगोचरामतिरतो द्वित्वं ततो जायते ।
द्वित्वत्वप्रमितिस्ततोऽनुपरतो द्वित्वप्रमानन्तरं
द्वे द्रव्ये इति धीरियं निगदिता द्वित्वोदयप्रक्रिया ॥

इति । अनेन श्लोकसन्दर्भेण द्वित्वादीनामुत्पत्तिप्रकारः सम्यगाम्नातः भवति ।

## १३) द्वित्वादिसंख्यानिवृत्तिविचारः :-

द्वित्वादिसंख्यानां निवृत्तिविषयोऽपि आचार्येणाभिप्रेतः श्लोकोऽयम्-

आदावपेक्षाबुध्या हि नश्येदेकत्वजातिधीः ।
द्वित्वोदयसमं पश्चात् सा च तज्जातिबुद्धितः ॥
द्वित्वाख्यगुणधीकाले ततो द्वित्वं निवर्तते ।
अपेक्षाबुद्धिनाशेन द्रव्यधीजन्मकालतः ॥
गुणाबुद्धिर्दब्यबुध्या संस्कारोत्पत्तिकालतः ।
द्रब्यबुद्धिश्च संस्कारादिति नाशक्रमो मतः ॥

इति । श्लोकः स्पष्टार्थः ।

## १४) पीलुपाकविचारः :-

दर्शनेऽस्मिन् पोलुपाकः न्याये तु पिठरपाकः इति पाकद्वयं पदार्थेषु स्वीक्रियते । अस्य पीलुपाकस्य स्वरूपमेवं भवति– पक्वपरमाणूनां संयोगेन द्व्यणुकोत्पत्तिः, द्व्यणुकादिक्रमेण अवयवीभूतस्य महत्पदार्थस्योत्पत्तिः । यथा – यत्र घटे तेजसः अतिशयवेगकरणेन झटिति पूर्वव्यूहस्य नाशः एवं व्यूहान्तरस्योत्पत्तिः भवति तत्र पीलुपाकः इत्युच्यते । अत्र घटदृष्टान्ते पाकक्रियायाः सूक्ष्मतरकालस्य आकलनं न भवतीत्यतः पूर्वघटस्य नाशः न लक्षितो भवति । इयं वैशेषिकाणां पीलुपाकप्रक्रिया भवति ।

## १५) पिठरपाकविचारः :-

नैयायिकाभ्युपगता या पाकक्रिया सा पिठरपाकप्रक्रिया भवति । पिण्डभूतघटादीनामवयव्याः नाम पिठरः इति । अस्मिन् मते तेजसः संयोगानन्तरमपि अवयवानां नाशः न भवति । अवयवसम्बन्धेन अवयविमध्ये कश्चन पाकः भविष्यति । अर्थात् वैशेषिकमतानुसारं घटे अग्नि संयोगेन परमाणूनां विभागः एवं पूर्वं वर्तमानायाः श्यामरूपतायाः नाशः, अनन्तरं तस्मिन् घटे रक्तवर्णस्योत्पत्तिपर्यन्तं नवानां दशानां वा क्षणानां कालः अपेक्षितः अस्ति । नैयायिकमतानुसारमयं क्रमः न भवति । यतो हि एकस्मिन्नेव काले घटे अग्निसंयोगेन पूर्वरूपस्य नाशः, रूपान्तरस्योत्पत्तिः इति भवति । यत्र अवयवानां विभागः न भवति,

अपितु अवयवयुक्तावयविनि घटे एककालेनैव पूर्वरूपस्याः श्यामतायाः नाशः, अनन्तरक्षणे एव रूपान्तरस्य रक्तत्वस्योत्पत्तिः इत्ययं क्रमः एतैः स्वीकृतः । अयमेव पीठरपाकः इत्युच्यते । भवति चैवं पाकद्वयस्य विवेचनम् ।

## १६) विभागजविभागविचारः :-

विभागजविभागः द्विधा भिद्यते - कारणमात्रविभागोत्पन्नत्वेन वर्तमानः, कारणाकारणविभागोत्पन्नत्वेन वर्तमानश्चेति । तत्र कारण-मात्रविभागोत्पन्नप्रकारः एवम् – कार्येण व्याप्तं यत्कारणं तस्मिन् यत्कर्म उत्पद्यते तत् यदा अवयवान्तरेण विभागं उत्पन्नं करोति तदा आकाशादिप्रदेशात् विभागं उत्पन्नं न करोति, एवं यदा आकाशादि-प्रदेशात् विभागं उत्पन्नं करोति तत्कर्म, तदा अवयवान्तरात् विभागं उत्पन्न न करोति इति । यथा – कार्यव्याप्तं यत्कारणं तस्मिन् उत्पन्नं यत्कर्म, तत् द्वयणुकारम्भकत्वेन यत्परमाणुसंयोगात्मकं तस्य विनाशकं नाम विभागं उत्पन्नं करोति, एवं द्वयणुकानारम्भकत्वेन आकाशप्रदेशे यः संयोगः तस्य विनाशकविभागं उत्पन्न न करोति इति यः सः प्रथमः । अयं भावः - कार्यारम्भकत्वेन यः अस्ति संयोगविशेषः सः कारणत्वेन स्वीक्रियते । तस्य विनाशकविभागस्य उत्पादयित्री शक्तिः, एवं कार्यानारम्भकत्वेन यः भवति संयोगविशेषः, तेन विनाशकविभागस्यो-त्पादने शक्तिर्न तिष्ठति । यतः एकस्मिन् धर्मे एकत्र धर्मद्वयस्य स्थानमिति मतं सर्वशास्त्रविरुद्धम् । दृष्टान्तः कमलकुड्मलमिति । कमलस्य विकासकाले आकाशप्रदेशेन सह यः कमलस्य अनारम्भकात्मकः संयोगः, तस्य विनाशकविभागस्य जनकत्वेन एकप्रकारस्य कर्मणः उत्पत्तिर्भवति । अर्थात् कमलस्य विकासकाले कमलावयवेषु यत्कर्म यदा उत्पन्नम् तदा तत्कर्मणः अवयवमध्ये विभागोऽपि उत्पद्यते, एवं तेन विभागेन कमलस्य आकाशप्रदेशेन सह यः संयोगः तस्य नाशो भवति, सः संयोगः कमलस्य अनारम्भकः । कमलकुड्मलसंयोगस्य नाशकरण-त्वेन शक्तिमान् यः विभागः सः कर्मणि सति अस्तीत्यभ्युपगम्यते । एवं

संक्षेपतः कारणमात्रविभागजन्यविभागस्य विचारः कृतः ।

द्वितीयं भवति कारणाकारणविभागोत्पन्नमिति । अर्थात कारणाकारणविभागजन्यविभागः इति । केवलकारणमात्रभूतानां विभागात्मकेन उत्पन्नत्वेन यः अन्यः विभागः भवति तस्य कारणमात्रविभागजविभागः इति संज्ञा । यथा– द्व्यणुकस्य कारणत्वेन परमाणुद्वयं तिष्ठति । द्वयोः कारणभूतयोः परमाण्वोः अकारणमेकं न तिष्ठति । अतः अनयोः परमाण्वोः विभागेन यः विभागः उदेति सः कारणमात्रविभागजन्यः इत्युच्यते । कारणाकारणयोः द्वाभ्यां विभागेन विभागोऽयमुदेति । दृष्टान्तः - करताडनम् । अस्मिन् करताडने दक्षिणोत्तरहस्तयोः मेलनेन यत्कर्म उत्पद्यते तत् अवयवान्तरविभागेन उत्पन्नं भवति । एवमेव तत्कर्म आकाशप्रदेशादपि विभागं प्राप्नोति । शरीरावयवान्यतमत्वेन अस्मिन् कर्मणि हस्तः कारणभूतः भवति । आकाशस्तु शरीरस्य कारणं नास्तीति कृत्वा अस्मिन् कर्मणि अकारणं तिष्ठति । अनेन करताडनात्मके कर्मणि कारणभूतहस्तस्य अकारणभूतस्याकाशस्य च विभागेन यत् शरीराकाशयोः विभागात्मकं कर्म उत्पद्यते तत् कारणाकारणविभागजन्यविभागत्वेन आम्नायते । एवं द्विविधत्वेन विहितः विभागजविभागविचारः ।

## १७) अन्धकारविचारः :-

अयं अन्धकारविचारः बहुभिराचार्यैः बहुधा विस्तृतः । वेदान्तिनः वदन्ति - यद्यपि अन्धकारः आभासद्रव्यभूतः अथापि तस्मिन् यद् भासते नीलरूपं तत् तस्मिन् आरोपितं सत् वास्तविकसत्तां न लभते । यथा - आकाशमण्डले जले च भासमानं नीलरूपं आरोपितं सत् केवलं प्रतीतिमात्रं भजते न तु वस्तुसत्तारूपेण, एवमत्रापि इति । मीमांसकमतानुयायिनः प्राभाकराः अभिप्रयन्ति - आलोकाऽसहकृतचक्षुर्ग्राह्यं भावस्वरूपं द्रव्यं तमः इति । तमः इति द्रव्यान्तरं नास्ति इति नैयायिकवैशेषिकादयः कथयन्ति–आलोकाभावात्मकं तमः, न त्वन्यत् द्रव्यान्तरम् । यदि तमः द्रव्यत्वेन स्वीक्रियते तदा इयं शङ्का उदेति - एतद् द्रव्यं नव

द्रव्येषु अन्यतमम् । अथवा नवद्रव्यभिन्नत्वेन दशमं द्रव्यमिति । नवद्रव्येषु अन्यतमत्वेन अस्यान्तर्भावः वक्तुं न शक्यते । यतो हि कस्मिन् द्रव्ये अस्यान्तर्भावः तस्य द्रव्यस्य सर्वे गुणाः तमसि अपि सन्तीति वक्तव्यम् । एवं निर्णेतुं न शक्यते । तमसि नीलरूपं विना अन्यो गुणः न दृश्यते । अस्तु दशमद्रव्यत्वेन तस्य व्यवहारः इत्ययमपि पक्षः न समीचीनः । यतः निर्गुणत्वेन अन्धकारः अस्तीति कारणेन अयं द्रव्यत्वं न भजते । यदि भवति अस्मिन् द्रव्यत्वं तदानीमेव दशमत्वेनास्य व्यवहारः । गुणाश्रयत्वं द्रव्यस्य लक्षणम् । अन्धकारे तु रूपरसादिगुणानां सद्भावो नास्ति । अतः द्रव्यलक्षणमन्धकारे न घटते । यदि तमः अद्रव्यं तर्हि दशम-व्यवहारः तस्य कथं भविष्यति ?

ननु अन्धकारेऽपि नीलरूपं दृश्यते । अस्मिन् अपि गुणस्य सत्त्वात् अयं द्रव्यान्तरभूतः इति चेत्- न । यतो हि नीलरूपं रसगन्धादि-व्याप्तं भवति, यत्र नैल्यम् तत्र रसगन्धादीनामुपलब्धिरस्ति । यथा-नीलकमलम् इति । नीलरूपव्यापकत्वेन गन्धादिगुणाः तिष्ठन्ति, न व्यापकाभावे व्याप्यं तिष्ठति । तस्मात् अन्धकारे नीलरूपाभावः सुतरां सर्वसिद्धः इति कृत्वा सः तेजोऽभावः अन्धकारः इति निश्चयः ।

केचन वदन्ति - तमश्चलति इत्यस्ति व्यवहारः, अनेन अस्य गतिः दृष्टा, अस्याः कुत्र प्रयोजनमिति ? अस्य समाधानमेवम् - शून्यात्मके यस्मिन् तमसि भ्रमात्मिका नीलरूपप्रतीतिर्दृष्टा तद्वत् चलनक्रियायाः प्रतीतिरपि प्रतीतित्वेन वस्तुसती अपि इयमपि अज्ञाना-त्मिका, न वास्तविकी इति सिद्धम् । तस्मात् अन्धकारविषयविचारे वैशेषिकाणां सिद्धान्तोऽयं भवति - आलोकज्ञानाभावस्वरूपमेव तमः इति । नच तमः इति शब्देन अन्धकारस्य व्यवहारसत्वात् कथमयम-भावत्वेन स्वीक्रियते, अतः शब्दसामर्थ्येन अन्धकारः भावरूपः इति वाच्यम् । यतो हि विधिप्रत्ययवेद्यत्वेन या नञा अनुल्लिखितबुद्धि-विषयत्वेन यः शब्दात्मको हेतुः दत्तः सः व्यभिचरितः । यथा-प्रलयविनाशावसानादयः । अत्र प्रलयशब्देन सृष्टेरभावः, विनाशशब्देन ध्वंसः, अवसानशब्देन समाप्तिरथवा वर्णानामभावः उच्यते । एवमेते

विधिप्रत्ययवेद्यास्सन्तः नञ् ुल्लिखितबुध्यविषयत्वमपि प्रपद्यन्ते ।

नन्वेवमपि अभावरूपेण स्थितेऽप्यन्धकारे कथं भावरूपत्वमापद्यते इति चेत्– उच्यते । यथा दुःखाभावत्वेन सुखमनुभूयते इति प्रतीतिः, संयोगाभावे विभागस्य व्यपदेशः इत्यादयः दृश्यन्त एव । शिरसि आपतितभारनिष्कासेन सः पुरुषः यथा – "अहमिदानीं सुखी अभवम् इति वदति" इत्यादिव्यवहारेण अभावेऽपि तस्मिन् तमसि भावप्रतीतिः सार्वजनीना इति संक्षिप्तोऽयं अन्धकारविचारः ।

## १८) अभावविचारः :-

सप्तमपदार्थत्वेन अभावः स्वीक्रियते । अभावप्रतीतिः निषेधात्मकप्रमाणेन सिध्यति । यथा - घटः नास्ति, पटो न इत्यादयः । समवायसम्बन्धरहितः एवं समवायभिन्नः यः पदार्थः सः अभावः इति कथ्यते । समवायसम्बन्धरहित इत्यनेन विशेषणेन द्रव्यगुणकर्मसामान्यविशेषेषु अभावस्य लक्षणं न भवति । यतः द्रव्यादयः समवायसम्वन्धन तिष्ठन्ति । द्वितीयविशेषणेन एतद् फलम्– यद्यपि समवायः समवाय सम्वन्धेन रहितः । यतः यदि समवायेऽपि समवायान्तरस्याङ्गीकारः क्रियते तर्हि समवायस्यानवस्थादोषः प्रसज्येत । अतः समवायसम्बन्धरहितः यः सः अभावः इति कथनेन समवायेऽतिव्याप्तिः । दोषममुं निवारयितुं समवायभिन्नः इत्युक्तम् ।

संक्षेपेण अभावः द्विधा विभज्यते- संसर्गाभावः अन्योन्याभावश्चेति । अन्योन्याभावः एकप्रकारकः । संसर्गाभावस्तु प्रागभावप्रध्वंसाभावात्यन्ताभावेन त्रिधा भिद्यते । एतेषां त्रयाणां संसर्गात्मकसम्बन्धेन अभावोऽयं तिष्ठतीति कृत्वा अस्य नाम संसर्गाभावः । तत्र प्रागभावः - मृत्पिण्डे घटसम्बन्धस्य यः निषेधः सः प्रागभावः । एवं घटनाशानन्तरं घटस्य प्रतीतिः यत्र न भवति सः प्रध्वंसाभावः । यत्र भिन्नघटविशिष्टेषु अवयवेषु घटसम्बन्धः निषेधत्वेन प्रतीयते, एवमेव भूतले घटो न इति वाक्येन यः भूतले घटसम्बन्धाभावः स्वीक्रियते तस्याभावस्य नाम

अत्यन्ताभावः इति । संयोगाभावे प्रागभावप्रध्वंसाभावौ अनित्यौ। यतः प्रागभावः अनादित्वे सति सान्तः इति, अनन्तत्वे सति उत्पत्तिमान् प्रध्वंसाभावः इति चोच्यते। केवलं अत्यन्ताभावान्योन्याभावौ नित्यौ भवतः। प्रतियोगी सन् आश्रयः यस्य सः अत्यन्ताभावः। यतः स्वस्मिन् स्वयं न तिष्ठति। अस्य लक्षणं पूर्वमेव सम्पादितम्। अत्यन्तान्योन्याभावयोः एतद् वैलक्षण्यं यत् अत्यन्ताभावस्य प्रतीतिः प्रतियोगिसामानाधिकरण्येन न भवति। अन्योन्याभावप्रतीतिस्तु प्रतियोगिसामानाधिकरण्येनैव भविष्यति। अस्य लक्षणमेवं सम्पादितं कणादेन - अत्यन्ताभावभिन्नत्वेन यः नित्यः अभावः सः अन्योन्याभावः इति। अत्यन्ताभावभिन्नत्वेन वर्तमानानां परमाणूनामतिव्याप्तिनिवारणाय अस्मिन् विकल्पे अभावेति पदसंयोजनं भवति। अन्योन्याभावेन तादात्म्यम्, अर्थात् स्वारूप्यस्य निषेधः क्रियते। यथा - घटः पटो न। अनेन घटत्वं पटे नास्ति इति घटस्वारूप्यनिषेधः पटे क्रियते। अत्यन्ताभावेन तु - 'वायुः अरूपवान्" इत्यत्र वायौ रूपसम्बन्धस्यैव निषेधः क्रियते, न तु वायोः स्वारूप्यम् इत्यनयोः अस्ति महद्वैलक्षण्यम्।

## १६) पुरुषार्थविचारः :-

"सप्तपदार्थानां सम्यग्ज्ञानेन भवति पुरुषार्थः"इति कणादवचनेन अभावोऽपि पुरुषार्थस्वरूपेण स्वीकृतः। इयं शङ्का उदेति यत् अभावेन वस्तुनिषेधः क्रियते न तु वस्तुनः प्रतिपादनम्, सत्येवं कथमयं पुरुषार्थहेतुरिति। अस्य समाधानम्- सर्वेषां मोक्षः परमपुरुषार्थः। मुक्तेः स्वरूपमेवं भवति - "दुःखात्यन्तोच्छेदः मोक्षः" इति। अत्यन्तोच्छेदपदेन अभावः स्वीकृतः। तस्मात् अभावः स्वयं पुरुषार्थस्वरूपः इति हेतोः अस्य अभावस्य विवेचनं युक्तियुक्तमेव इति संक्षिप्तं वैशेषिकदर्शनम्॥



******************

# तृतीयोऽध्यायः - सांख्यदर्शनम्

******************

## ३-१) सांख्यशास्त्रम् :-

सांख्यशास्त्रस्य जन्मदाता भगवान् कपिलः । शास्त्रेऽस्मिन् संक्षेपतः तत्त्वचतुष्टयस्य अस्तित्वमभ्युपगतम् । तानि यथा – प्रकृतिः, प्रकृतिविकृत्युभयात्मिका, केवलविकृतिः, अनुभयात्मिका चेति । प्रकृतिः मूलप्रकृतिः अथवा प्रधानमित्युच्यते । यतः सा एव सकलप्रपञ्चस्य मूलकारणभूता भवति। प्रकर्षेण करोति - कार्यमुत्पादयति इति प्रकृतिः इति तस्याः व्युत्पत्तिः। अथवा या स्वभिन्नतत्वान्तराणामुत्पत्तिं करोति सा प्रकृतिरिति । प्रकृतिरित्यत्र प्र इति शब्देन प्रकर्षस्य प्रतीतिर्द्योत्यते, स तु प्रकर्षः तत्वारम्भकः भवति । अत्रेदानीमयं प्रश्नः उदेति यत् घटस्य मृत्तिका प्रकृतिः इति व्यवहारोऽयं लोके दृष्टः, यदि घटप्रकृति-र्मृत्तिका तर्हि मृत्तिकाभिन्नत्वेन तत्वान्तरभूतः घटः इति परं न सिध्यति अथापि घटप्रकृतिर्मृत्तिका इति कथमुच्यते इति चेत् - उच्यते । यद्यपि मृत्तिका घटप्रकृतिः वस्तुतः नास्ति तथापि प्रकृतिशब्देन प्रकर्षाविवक्षया केवलोपादानकारणमेव प्रकृतित्वेन स्वीकृत्य उक्तदृष्टान्ते व्यवहारः। अनेन एतत्सिद्धं भवति यत् स्वभिन्नतत्वान्तरोत्पत्तौ कारणात्मिका या सा प्रकृतिरिति एतल्लक्षणं तस्याः सामान्यलक्षणं भविष्यतीति।

## २) सांख्यशास्त्रपरिचयः :-

प्रकृतेः लक्षणं अष्टतत्त्वेषु अनुस्यूतं भवति। तानि – प्रधानम्, महत्तत्वम्, अहंकारः, शब्दः, स्पर्शः, रूपम्, गन्धः इति। शब्दादयः

पञ्च तन्मात्ररूपेण स्वीक्रियन्ते। अत्रायं क्रमः - प्रधानात् महत्तत्वस्योत्पत्तिः, उत्पत्तिमत्वात् तस्मात् भिन्नं अन्तवच्च तदिति कथ्यते। अत एवोच्यते - तत्वान्तरस्योत्पादकत्वात् कारणं प्रधानं महत्तत्वञ्च प्रकृतिः, एवं तदेव महत्तत्वं प्रधानेन विकृतत्वात् विकृतिरिति च उच्यते। प्रधानं न केनापि उत्पत्तिं भजते। प्रधानेनैव सकलप्रपञ्चस्योत्पत्तिः इति हेतोः एतत् मूलप्रकृतिरित्याम्नायते। महत्तत्वेन अहंकारोत्पत्तिः अनेन शब्दादीनां पञ्च तन्मात्राणामुत्पत्तिः भविता। प्रधानवत् महत्तत्वमपि अहंकारस्य प्रकृतिः, प्रधानस्य विकृतिः एवमहंकारोऽपि पञ्चतन्मात्राणां प्रकृतिः, महत्तत्वस्य विकृतिश्च भविष्यति। पञ्चतन्मात्राणां सकाशात् पञ्चमहाभूतानि उत्पत्तिमत्वं प्राप्नुवन्तीत्यतः एतेषां भूतपञ्चकानां प्रकृतिरूपाणि पञ्चतन्मात्राणि। इमानि पञ्च तन्मात्राणि अहंकारं प्रकृतित्वेन स्वीकृतत्वात् विकृतिरूपाणि भविष्यन्ति। तस्मात् महदादि सप्त प्रकृति-विकृतयः इति भण्यन्ते। अत्रेयं सांख्यकारिका—

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।
षोडशकस्तु विकारः न प्रकृतिर्न विकृतिः पुरुषः ॥(सां० का० ३)

इति। पञ्चमहाभूतानि,पञ्च ज्ञानेन्द्रियाणि,पञ्च कर्मेन्द्रियाणि एवं मनः इमानि षोडशतत्त्वानि केवलं विकृतिमात्राणि भवन्ति। यतः एतैः तत्त्वैः तत्त्वान्तरस्योत्पत्तिः न भवतीति कृत्वा इमानि षोडशतत्त्वानि अन्यस्य प्रकृतिरूपाणि न तिष्ठन्ति। विकृतिरूपाणि षोडशतत्त्वानि, प्रकृति-विकृतिरूपेण महदादि सप्त, मूलप्रकृतिरेका इति आदिमत्त्वेन वर्तमानानि चतुर्विंशतितत्त्वानि भवन्ति। पञ्चविंशतितमः पुरुषः। पुरुषोऽयं जीवात्मा इति कथ्यते। जीवात्मभिन्नत्वेन सांख्यमते अन्यस्य ईश्वरस्यास्तित्वं न स्वीक्रियते। जीवात्मा प्रतिशरीरं भिन्नः। यदि जीवेषु भिन्नत्वं स्वीक्रियते तर्हि यदि एकः बद्धः तर्हि सर्वे बद्धाः, उत एकः मुक्तश्चेत् सर्वे मुक्ताः, सुखी चेत् सर्वे सुखिनः, अथवा एकः दुःखी सर्वे दुःखिनः इत्यापतति महान् क्लेशः। अत्र भवति एतद् वाक्यम्—
"जन्मादिव्यवस्थातः पुरुषबहुत्वम्" (सां० सू० २-२४१) इति। अयं

जीवात्मा अनादिः सूक्ष्मः चेतनः सर्वगतः निर्गुणः कूटस्थः नित्यः द्रष्टा भोक्ता क्षेत्रविद् इत्यादिप्रकारेण व्यवहारसत्वं भजते ।

## ३) प्रकृतेः स्वरूपविवेचनम् :-

मूलप्रकृतिः त्रिगुणात्मिका । सत्वरजस्तमोगुणानां साम्यावस्था या सा अव्यक्ता मूलप्रकृतिरिति । गुणत्रयाणां साम्यावस्था इति कथनेन अयं सत्वगुणः, इदं रजः, इदं तमः एवं व्यवहारः नोदेति । गुणेषु क्रियावत्त्वं न भवति । अतः सत्वादि तत्त्वत्रयेण न स्वीक्रियन्ते । त्रिगुणात्मकं प्रधानमिति एकं तत्त्वमिति निश्चयः । वस्तुतः इमे सत्वादि त्रयो गुणाः द्रव्यरूपाः, न गुणरूपाः । इदानीमयं प्रश्नः उदेति यत् यदि सत्वादयः द्रव्यरूपाः तर्हि शास्त्रे लोके च गुणशब्देन सत्वादीनां व्यवहारः कथं क्रियते इति । अस्योत्तरम् – इमे त्रयः गुणाः पुरुषस्य भोगसाधनीभूताः इत्यतः एते गुणीभूताः भवन्ति । गुणीभूतत्वात् गुणत्वेन व्यवहारः, न तु वस्तुतः एते गुणाः । यतः गुणस्वरूपं गुणभिन्नत्वेन भवति । यथा - गन्धस्वरूपात् भिन्ना या पृथिवी तस्याः गुणः गन्धः इति भवति । एवं प्रकृत्यामेते त्रयः गुणाः न सन्ति । यतः गुणत्रयभिन्नत्वेन प्रकृतेः स्वरूपमेव नास्ति । तस्मात् गुणत्रयात्मिका प्रकृतिः. नैते गुणाः तस्याः धर्मभूताः । भगवान् सूत्रकारः अस्याः स्वरूपमेवं वर्णयति – "सत्त्वादीनामतद्धर्मत्वं तद्रूपत्वात्" (सा० सू० ६-३९)इति । अन्या शङ्का उदेति-यदि सत्त्वादयः प्रकृतिगुणाः न भवन्ति तर्हि "प्रकृतेः क्रियमाणानि गुणकर्माणि सर्वशः" (भग० ३ २७) इति गीतावचनस्य कुत्र सङ्गतिः ? इति चेत– उच्यते । यथा– वृक्षसमुदायभिन्नत्वेन काननं न तिष्ठति, किन्तु वृक्षसमुदायस्यैव वनमिति व्यवहारः, अथापि वने एते वृक्षाः एव व्यवहारः लोके प्रसिद्धः तद्वत् सत्वादीनामनतिरिक्तत्वेन प्रकृतिसत्त्वाज्युपगमेऽपि एते प्रकृतिगुणाः इति व्यवहारः लोकाविरुद्धत्वेन सम्भवत्येव इति सङ्क्षेपेण तस्याः स्वरूपम् ।

## ४) गुणानां स्वभावविचारः :-

अत्रेयं भवति सांख्यकारिका—



सत्वं लघु प्रकाशकमिष्टमुपलब्धकं चलं च रजः ।
गुरुवरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः ।। (सा० का० १३)

इति । सत्वगुणस्वभावः लघुत्वं प्रकाशकत्वं च । रजोगुणस्य स्वभावः चलत्वं । तमोगुणस्य स्वभावः आच्छादकत्वं । अत्र भवति पञ्चदशीश्लोकः-

वैराग्यं क्षान्तिरौदार्यमित्याद्याः सत्वसम्भवाः ।
कामक्रोधौ लोभयत्नावित्याद्याः रजसोत्थिताः ।।
आलस्यभ्रान्तितन्द्राद्या विकारास्तमसोत्थिताः । (पंच० २-१४-१५)

इति । सत्वगुणः लघुत्वात् प्रकाशकः, रजोगुणः सक्रियात्मककारणेन स्वकार्येषु प्रवर्तकः, तमोगुणः गुरुत्वात् सर्वपदार्थानामाच्छादक इत्युच्यते । स्वरूपभूताः एते त्रयः गुणाः प्रत्येकशः अनेकप्रकारवत्वं भजन्ते । केचन अणुपरिमाणवत्वेन केचन विभुपरिमाणवत्वेन परिगण्यन्ते । अस्मिन् शास्त्रे मध्यमपरिमाणवत्वेन गुणाः न परिणमन्ते । यतो हि घटादि-समानत्वेन सावयवभूताः पदार्थाः अनित्याः भवेयुः । अयं सिद्धान्त-प्रतिकूलः । मूलप्रकृत्या उत्पन्नाः ये वैषम्यावस्थापन्नाः सत्वादयः ते मध्यमपरिमाणवत्वेनापि स्वीक्रियन्ते । तस्मात् सत्वादि-त्रयो गुणाः अनेकप्रकाराः इति ।

ननु यदि सत्वादयः अनेकाः तर्हि "त्रयो वै गुणाः" इरि कथमिति चेत - उच्यते । यथा वैशेषिकदर्शने पृथिव्यादिषु नित्यानित्यशरीरे-न्द्रियविषयभेदेन सत्सु अनेकेषु द्रव्यबिभाजकोपाधिना "नव द्रव्याणि" इत्युच्यते तथा अत्रापि गुणत्वविभाजकेन सत्वत्व रजत्वं, तमस्त्वमिति उपाधिना त्रयः एव गुणाः लक्ष्यन्ते, एवं लोके दृष्टत्वात् ।

## ५) महत्तत्वविचारः :-

यद् भवति बुद्धितत्वम् तस्य महत्तत्वमिति नाम । धर्मज्ञान-वैराग्यैश्वर्यादि उत्कृष्टगुणानामाश्रयभूतमेतत्तत्वमिति महत्तत्वेनास्य व्यवहारः । यद्यप्यस्मिन् महत्तत्वे सत्वादयः त्रयः गुणाः वर्तन्ते अथापि

सत्वगुणप्राधान्येन रजस्तमौ तिरोहितौ भवतः। महत्तत्वपरिणाम-विशेषाः बुद्धि-मनोऽहङ्कारादयः। त्रयाणामेतेषां अन्तःकरणमिति नाम। यदा अन्तःकरणं निश्चयात्मकवृत्तिमत् भवति तदा बुद्धिरिति, अभिमानात्मकवृत्तिरूपेण परिणतान्तःकरणस्य अहंकार इति, संकल्प-विकल्पात्मकरूपेण एवं संशयात्मकत्वेन परिणतमन्तःकरणम् मनः इति चाभिधीयते। मनो-बुद्ध्यहंकारादीनां यत्कारणमन्तःकरणं तद् वृक्षरूपेण स्वीक्रियते, वृक्षस्यास्य अङ्कुरावस्था महत्तत्वमिति विवेचनम्। किंच यथा प्रधाने सत्वादिगुणानां अणु-विभुभेदेन अनेकप्रकाराः भेदाः उपन्यस्ताः तथा महत्तत्वेऽपि अनेकप्रकारात्मकाः भेदाः सिध्यन्ति। ब्रह्मादिस्थावरपर्यन्तं कियन्तः जीवाः व्यवहारवत्वेन स्वीक्रियन्ते, तेषु प्रत्येकस्मिन् जीवे उपाधिभूतं महत्तत्वमेकमस्तीति अभ्युपगम्यते। एव-मभ्युपगमेन यद्यपि महत्तत्वे सत्वगुणः एवं प्रधानतया तिष्ठति तथापि केचन जीवाः रजोगुणाधिक्येन उद्भवन्ति, केचन तमोगुणाधिक्येन, अपरे केचन सत्वतमोगुणाधिक्येन, अन्ये केचन रजस्तमोगुणाधिक्येन, अन्ये च सत्वरजगुणाधिक्येन प्रादुर्भवन्ति। गुणत्रयेषु यत्र यस्य गुणस्याधिक्यं तत्रावशिष्टगुणस्य तिरोहितत्वमुच्यते। यथा ब्रह्मणि सत्वगुणः, विष्णौ रजोगुणः ईश्वरे तमोगुणः इत्यादि।

## ६) अहङ्कारविचारः :-

अहङ्कारस्योत्पत्तिः पूर्वमेव प्रतिपादिता। अयमहङ्कारः बुद्धिविशेषात्मकः। अहन्ता इति अहमाकारात्मिका बुद्धिः, इदन्ता इति इदमाकारात्मिका बुद्धिः अयं व्यवहारः एव बुद्धिविशेषः इत्युच्यते। अहन्ता बुद्धि विना इदन्ताबुद्धिः नोदेति, अतः अहन्ताबुद्धिविशेषभूता-हङ्कारस्योत्पत्तिरिति सिध्यति। अस्मिन्नप्यहङ्कारे सत्वादिगुणानामुत्कर्षा-पकर्षेण त्रयः भेदाः उत्पद्यन्ते। यथा - सात्विकभेदस्य वैकारिकः इति, राजसभेदस्य तैजसः इति, तामसभेदस्य भौतिकः इत्यभ्युपगमः। यत्र रजस्तमगुणयोः तिरोहितत्वेन उत्कृष्टत्वेन सत्वगुणः विराजते तत्र सात्विकाहङ्कारस्य स्थितिर्भवति। एवमन्यत्रापि। सात्विकाहङ्कारः

रजोगुणसहायेन प्रवृत्त्यात्मकधर्मभूतानामेकादशेन्द्रियाणामुत्पत्तिं करोति। पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, एकं मनः इति एकादशेन्द्रियाणि। भवति चैवमहङ्कारविचारः।

## ७) पञ्चतन्मात्राणां विचारः :-

शब्दस्पर्शरूपरसगन्धानां पञ्चानां तन्मात्रत्वेन व्यवहारः। एतेषु भेदद्वयं वर्तते– सविशेषः निर्विशेषश्चेति। तत्र शब्दे - उदात्तानुदात्तनिपातगन्धर्वात्मकाः विशेषगुणाः सन्ति। स्पर्शे – उष्णत्व, शीतत्वमृदुत्वादिविशेषगुणाः, रूपे – शुक्लत्वकृष्णत्वादिविशेषगुणाः, रसे- मधुरत्वाम्लत्वादिविशेषगुणाः उत्पद्यन्ते। इमानि पञ्च तन्मात्राणि क्रमात् आकाश - वायु - तेजो – जल - पृथिव्यादि पञ्च महाभूतानां प्रकृतिरूपाणि भवन्ति।

## ८) सांख्यशास्त्रे सृष्टिक्रमः :-

सृष्टिविषये शास्त्रकारस्यास्य विचारः स्वतन्त्रः। सृष्टेः पूर्वं स्वतन्त्रा प्रवृत्तिमती केवला मूलप्रकृतिरासीत्। प्रवृत्तिस्वभावकारणात् सा स्वयं क्षुब्धा सती पुरुषविशेषसंज्ञकः यः नारायणः तेन सह संयुक्ता भवति। एवं पुरुषसंयुक्ता सती स्वजातीयप्रकृतिभूतानां सह न्यूनाधिकभावेन एकीभूय महत्तत्वादीनां सृष्टिं करोति।

अत्रायं प्रश्नः - "असङ्गो ह्ययं पुरुषः" (बृ० इ० ४ ३-१५) इति श्रुतिबलेन सः पुरुषः प्रकृत्या सह कथं संयोगवत्त्वं प्रपद्यते इति आगते सति समाधत्ते – विकारहेतुः संयोगः, तस्याभावः पुरुष अस्तीति श्रुतिरियं ब्रूते। प्रकृत्या सह सत्यपि पुरुषसंयोगे 'पद्मपत्रमिवाम्भसा' इतिवत् पुरुषे विकारः न भवति। महत्तत्वं चेतनाचेतनोभयात्मकं भवति। प्रकृतौ अचेतनांश एव मुख्यत्वेनोत्पद्यते। तस्यां प्रकृत्यां चेतनांशः अभिव्यज्यते। पुरुषप्रतिबिम्बः महत्तत्वे भासते। अतः महत्तत्वस्योत्पत्तिः गौणी इत्याम्नायते। एवमेव सृष्टेः आरम्भकाले महत्तत्वस्य कारणीभूतविषमावस्था गुणत्रयसम्बन्धेन जीवविशेषभूतायाः आदिशक्तेरभि-

व्यक्तिरपि भवति । अत्र प्रकृतिः अधिष्ठात्री देवी सती महालक्ष्मीः, दुर्गा, भवानी इत्यादिपुराणप्रसिद्धनाम्ना अभिव्यज्यते, एवं जीवे सन्ति कियन्तः विशेषाः ते सर्वे प्रधानादि-उपाधिसम्बन्धेन भासिता भवन्ति। तस्मादेव दृश्यत्वेन सन्ति ये ते सर्वे औपाधिकाः इत्युच्यन्ते । औपाधिक-विशेषरहितः यः निर्विशेषः जीवसमष्टिरूपः स ब्रह्मा इति, उपाधि-विशिष्टस्य सविशेषस्य जीवसमष्टिरूपस्यास्वयम्भूः इति संज्ञा। अत्र विशेषत्वमेवोपाधिः न तु जीवधर्मः। जीवस्योपाधिः लिङ्गशरीरं भवति। बुद्धिः, अहङ्कारः, मनः पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, पञ्च महाभूतानि इत्यष्टादशतत्त्वानां समुदायस्य लिङ्गशरीरमिति व्यवहारः। बुद्धेः वृत्तिभेदेन प्राणः उत्पद्यते । अतः प्राणतत्त्वं भिन्नमिति नाङ्गीक्रियते । आत्मचैतन्यस्याभिव्यक्तिः उपाधिना एव भवति, यथा–अग्नेः अभिव्यक्तिः इन्धनेन भवति । प्रथमे स्वयम्भोः उपाधिभूतं लिङ्गशरीरमेकमेवासात् । अनन्तरं अशभूतव्यष्टिलिङ्गशरीरेण व्यष्टिजीवानामुपाधिमत्व स्वीकृत्य जीवाः अनेके इति विभज्यन्ते, यथा पितृपुत्रपरम्परा । एकस्य पितुस्सकाशात् अनेकलिङ्गशरीराणां पुत्राणामुत्पत्तिभवतीति दृष्टं लोके । अयं स्वयम्भूः स्वसूक्ष्मशरीरावयवान् स्वसूक्ष्मचैतन्यांशैः सह संयुज्य सर्वप्राणिनां सृष्टिं करोति । जीवाः वस्तुतत्त्वेन परस्परं भिन्नाः इति एतेषां सृष्टिक्रमः ।

## ६) भौतिकपदार्थानां तत्वविचारः :-

सांख्यमतानुसारं विवेकज्ञानात् मोक्षसिद्धिरिति । विवेकज्ञानं तु चिदचितोः भेदज्ञानात्मकम् । भेदज्ञानं प्रतियोगि सत् अनुयोगिज्ञान-सापेक्षभूतं भवति । यथा - गोः भेदः अश्वे अस्ति इत्यतः अत्र गौः प्रतियोगी, अश्वः अनुयोगी च भवति । एवं प्रकृते प्रकृतिपुरुषभेदेन तत्त्वद्वयं स्वीक्रियते । अनयोः तत्त्वयोः विवेकज्ञानेन मोक्षः सिध्यति । उक्तं च - ज्ञानान्मुक्तिः (सा० सू० ३-२३) इति । अतः विवेकज्ञाने प्रतियोगित्वेन उत अनुयोगित्वेन यस्य सम्बन्धः तिष्ठति सः तत्त्वस्य सामान्यलक्षणत्वेन सिद्धो भवति। अतः प्रकृतिपुरुषयोः स्वरूपज्ञान-

मावश्यकम्। मूलप्रकृतेः सूक्ष्मतमत्वात् अस्याः ज्ञानं न सम्भवति। एवं साक्षात्प्रकृतिकार्यभूताः महदादयः सप्त सूक्ष्मरूपत्वात् एतेषां ज्ञानमपि विशदत्वेन न भवति। प्रकृतिपरम्परात्वेन वर्तमानाः विकारभूताः इन्द्रियादिषोडशपदार्थाः विस्पष्टरूपेण ज्ञातुं शक्यन्ते। षोडशतत्त्वानां सुस्पष्टज्ञानेन तेषु भिन्नत्वेन वर्तमाने पुरुषे भेदज्ञानसम्भवः सुकरः भवति। षोड़शविकारभिन्नत्वेन पुरुषे सिद्धे सति विकारभूतानां तेषां कारणं या मूलप्रकृतिः, तस्याः अपि पुरुषः भिन्नः इति प्रकृतिपुरुषयोः भेदज्ञानमवश्यं सिद्धं भवति।

घटपटादिपदार्थाः अनन्ताः इत्यभ्युपगमात् तेषां विशदरूपेण ज्ञानसम्पादनं कष्टसाध्यं भवति। मोक्षसाधनीभूतभेदज्ञाने घटपटादि-ज्ञानस्यावश्यकत्वमपि न भवति। पृथिव्यादिपञ्चभूतानां सकाशात् आत्मा भिन्नः इति ज्ञानसम्पादनेन भौतिकघटपटादिभेदज्ञानेन आत्म-ज्ञानसम्पादनस्य आवश्यकता नास्ति। पुरुषः निर्विशेषत्वात् स्थूलत्वादि-विधिमुखेन तस्य ज्ञानं न सिध्यति। किन्तु नेति नेति (बृ० उ० ३-९-२६) निषेधमुखेन नीलपीतत्वादिधर्माणामभावेन तस्यात्मनः स्वरूपं ज्ञातुं शक्यते। पञ्चतन्मात्रभूतानां शब्दादीनां सकाशात् पञ्च महाभूतानि उत्पन्नानि। भूतेषु पञ्चसु अयं विशेषः उत्तरोत्तरमेकैकः गुणः वर्धते। अस्य कारणमेतद् भवति - पूर्वपूर्वसूक्ष्मभूतसहिततन्मात्रेण उत्तरोत्तर-भूतस्योत्पत्तिः। अतः पूर्वस्य सूक्ष्मभूतगुणोऽपि उत्तरभूते अनुवर्तते। भवत्ययं पञ्चदशीश्लोकः—

शब्दस्पर्शौ रूपरसौ गन्धो भूतगुणा इमे।
एकद्वित्रिचतुःपंचगुणाः व्योमादिषु क्रमात्॥ (पंच० २-२)

इति। क्रमात् आकाशादिषु एकद्वित्रिचतुःपञ्चेति बोद्धव्यम्। उत्पत्ति-विषयिका सांख्यकारिका इयं भवति—

प्रकृतेर्महान् महतोऽहङ्कारस्तस्माद् गणश्च षोडशकः।
तस्मादपि षोडशकात् पञ्चभ्यः पंच भूतानि॥ (सा. का. २२)

इति। एतेषां पंचविंशतितत्त्वानां साधकत्वेन त्रीणि प्रमाणानि

भविष्यन्ति - प्रत्यक्षानुमानशब्दभेदात् । अत्रेयं कारिका—

दृष्टमनुमानमाप्तवचनं च सर्वप्रमाणसिद्धत्वात् ।
त्रिविधं प्रमाणमिष्टं प्रमेयसिद्धिः प्रमाणाद्धि ॥ (सा० का० ४)

इति । परोक्षत्वापरोक्षत्वस्मृतित्वसंशयत्वविपर्ययत्वादिधर्माः मनोवृत्तिभूताः भवन्ति । चैतन्यभूतः आत्मा असङ्गः निर्लेपश्च । प्रत्यक्षानुमानशब्दप्रमाणद्वारा एव पञ्चविंशतितत्वानां ज्ञानं सिद्धं भवति इत्ययं विचारः ।

## १०) सदसतोरुत्पत्तिविवेचनम् :-

सतः सज्जायते इति कार्यकारणभावव्यवस्थापनार्थप्रकारचतुष्टयस्य विप्रतिपत्तिः आचार्येण प्रदर्शिता अस्ति । ताः यथा – असतः असज्जायते,असतः सज्जायते,सतः असज्जायते,सतः सज्जायते इति । एतेषु पक्षचतुष्टये प्रथमः पक्षोः असङ्गतः । यतः असत्पदार्थस्य कार्यकारण–सम्बन्धे उत्पन्नस्य पदार्थस्य शशविषाणवत् व्यवहारयोग्यत्वं न सिध्यति । "असतःसज्जायते' इत्ययं पक्षः बौद्धानां कृते भवति । एते बौद्धाः, समस्तानां भावपदार्थानां क्षणिकत्वमभ्युपगच्छन्ति । क्षणिकत्वं भावपदार्थेषु कार्यकारणभावेन न तिष्ठति । कुतः इति चेत्- कार्यक्षणे कारणं न तिष्ठति, एवं कारणक्षणे कार्यं नास्ति इति हि तस्य व्यवहारः । अतः पूर्वक्षणभावरूपस्य यः विनाशः (अभावः) सः एव उत्तरक्षणभावरूपपदार्थस्य कारणत्वात् अगत्या 'असतः सज्जायते' इति वक्तव्यम् । बौद्धमते कार्यस्य या सत्ता सा क्षणिकावस्थितिरूपेण तिष्ठति न तु ततोऽनन्तरम् इति विवेचनीयम् । 'सतः असज्जायते' इति मतं अद्वैतवेदान्तिनां कृते भवति । मतमेतत् अद्वैतदर्शने प्रदर्शयिस्यते ।

चतुर्थः पक्षः 'सतः सज्जायते' इति सांख्यकाराणां भवति । नैयायिका अपि प्रायः एतन्मतानुयायिनः । इयांस्तु विशेषः – नैयायिकः कार्यविनाशानन्तरमपि तस्य कार्यस्य अवस्थितिः कतिपयक्षणपर्यन्तं तिष्ठति, कार्यावस्थितिः पारमार्थिकी इति मतमेतमुपक्षिपति । सांख्यस्तु-यस्य वस्तुनः कालत्रयेष्वपि बाधः न भवति, तादृशं कालत्रयाबाध्यत्व-

रूपत्सयत्वं प्रतिजानीते। अत्रेयं सांख्याचार्यस्य उक्तिः –

असत्त्वान्नास्ति सम्बन्धः कारणैस्सत्त्वसङ्गिभिः।
असम्बन्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिः॥(अ.वृ: १-११८)

इति नैयायिकमतं दूषयन् स्वमतं सिद्धान्तयति सतः सज्जायते इति। सांख्यमते कार्यकारणयोः भेदः न स्वीक्रियते। कारणगता या सत्ता सा एव कार्यरूपेणावतिष्ठते इति वक्ष्यमाणत्वात अयं सत्कार्यवादी इत्याम्नायते। एतन्मतोपोद्बलकत्वेन भवति गीतावाक्यम् –

नासतो विद्यते भावो नाभावो विद्यते सतः। (भग० २-१६)

इति। एतादृशस्मृतिवाक्यपुरस्सरं सांख्याचार्याः "सतः सज्जायते" इति सिद्धान्तं सम्यगाचक्षिरे। अत्रेयं भवति सांख्यकारिका—

असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात्।
शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम्॥(सा०का० ६)

इति। वितरस्तु आकरग्रन्थाद्बोद्धव्यः।

## ११) त्रिगुणात्मिका मूलप्रकृतिः :-

सत्वरजस्तमोगुणात्मिका प्रकृतिः। एतेषां सत्वरजस्तमोगुणानां धर्मभूताः सुखदुःखमोहाः भविष्यन्ति। एकैकोऽपि पदार्थः सुखदुःख-मोहात्मकत्वेन तिष्ठति। यथा एका स्त्री स्वात्मगुणैः पत्युः सुखं दास्यति इत्यतः तस्यां सत्वगुणः राराजते। एवं सा एव पत्युः सपत्नीनां प्रति दुःखकारणत्वेन तिष्ठति इति तस्यां रजोगुणः, एवमेव यदा औदासीन्येन मोहकारणत्वेन चरति तदा तस्यां तमोगुणः विराजते इति एकस्यामेव त्रयः गुणाः, तेषां गुणानां धर्मश्च अत्रसीदन्ति। मुह वैचित्ये-अविवेके इति धातोः मोहः उपेक्षाविषयत्वेनापि परिगण्यतै। प्रकृतेः त्रिगुणात्मकत्वं श्वेताश्वतरोपनिषदि आख्यातम्—

अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः॥
(श्वे० उ० ५-४)

इति। अनेन मन्त्राधारेण सांख्यशास्त्रस्य निर्माणमभूत् इति वेदविदां विपश्चिताम् मतम्।

अत्रायं प्रश्नः उदेति यत् अचेतना इयं प्रकृतिः चेतनसाहायं विना महदादिकार्योत्पादने क्षमतां न प्राप्नोति । यथा - चेतनप्रवृत्तिं विना अचेतनं स्वयमेव कार्यप्रवृत्तिमत् भवतीति न दृष्टं लोके । सारथिं विना रथः स्वयमेव न चलति । अतः मूलप्रकृतेः प्रेरकत्वेन अधिष्ठाता सर्वार्थदर्शी एकः परमेश्वरः अभ्युपगन्तव्यः इति ।

अस्य समाधानत्वेन वदति सांख्याचार्यः – अयं प्रश्नः एव न समीचीनः । कुतः इति चेत् चेतनसहायं विना अचेतनस्य प्रवृत्तिः लोके सर्वजनसाधारणत्वेन दृष्टा । यथा वत्सस्य वृद्धये अचेतनक्षीरस्य प्रवृत्तिः एवं चेतनसहायं विना अचेतनः मेघः लोकोपकाराय जलवर्षणे प्रवृत्तो भवति एवमेव त्रिगुणात्मिका अचेतना प्रकृतिरपि पुरुषस्य मुक्तये स्वयं प्रवृत्ता भवति । एतन्मतदृढीकरणं सांख्यकारिका इयं करोति -

वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य ।

पुरुषविमुक्तिनिमित्तं तथा प्रवृत्तिः प्रधानस्य ।।(सां०का०५-)इति ।

## १२) प्रकृतिपुरुषयोः परस्परापेक्षिता :-

पुरुषसंयोगेन प्रकृतौ एकः व्यापारः उत्पद्यते । यथा अयस्कान्तसंयोगेन लोहे एका क्रियात्मकशक्तिः उत्पद्यते तथा प्रकृतिपुरुषसंयोगः पङ्ग्वन्धन्यायवत् परस्परापेक्षः भवति । प्रकृतिः भोग्यरूपा सा, भोक्तारं पुरुषमपेक्षते,एवं भोक्ता पुरुषोऽपि भोग्यभूतां प्रकृतिं वाञ्छति । एवमुभयोः परस्परसापेक्षत्वं संयोगरूपेण तिष्ठति । अनेन सृष्टेः विस्तारः जायते । पङ्ग्वन्धदृष्टान्तवत् प्रकृतिपुरुषौ तिष्ठतः । उक्तं चेदं सांख्यकारिकायाम्—

पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य ।

पङ्ग्वन्धवदुभयोरपि सम्बन्धस्तत्कृतः सर्गः ।। (सां०का० २१)

इति । पङ्ग्वन्धन्यायः ज्ञायत एव । पङ्ग्वन्धौ उभावपि एकत्र मिलित्वा स्वलक्ष्यभूतंप्रदेशं यथा जग्मतुः एवमेव प्रकृतेः स्वप्रदर्शनार्थं पुरुषस्यापेक्षा, पुरुषस्यापि कैवल्यसम्पादनार्थं प्रकृतेरपेक्षा, उभयोः संयोगेन लक्ष्यभूतसृष्ट्यात्मककार्यस्योत्पत्तिः भवति । अत्र पुरुषः क्रियाशक्तिराहित्येन पङ्गुसमाना इति विवेचनीयम् । अन्धसम्बन्धेन

यथा पङ्गुः स्वाभीष्टदेशं गमिष्यति तथा प्रकृतिसम्बन्धेन पुरुषोऽपि विवेकज्ञानद्वारा कैवल्यं प्राप्नोति इत्येतत् शास्त्ररहस्यम् ।

अयं प्रश्नः पुरतः आगच्छति - पुरुषः निर्गुणः असङ्गश्च, कथमस्य प्रकृत्याः सह संयोगः इति । समाधानत्वेन एतदुच्यते- यद्यपि पुरुषे प्रकृतिः एवं प्रकृतिकार्यबुद्धेश्च भेदज्ञानं अस्ति तथापि पुरुषः अज्ञानेन भेदममुं स्वबुद्धिस्वरूपत्वेन जानाति । अपिच बुद्धौ वर्तमानाः सुखदुःखादिगुणाः ये, इमान् स्वात्मगुणत्वेन स्वीकरोति । तस्मात् एतद्दोष-निवारणार्थं पुरुषः कैवल्यापेक्षां करोति । कैवल्यं तु केवलं प्रकृति-पुरुषविवेकज्ञानाधीनं भवति । तस्मात् प्रकृतिपुरुषयोः परस्परापेक्षारूपः सयोगः अपेक्षते सिद्धश्च इत्यनयोर्विवेकः ।

## १३) प्रकृतिप्रवृत्त्या पुरुषस्य मोक्षः :-

प्रकृतिप्रवृत्त्या पुरुषस्य मोक्षः कथं सिध्यति इत्येका शङ्का उदेति । अस्योत्तरमेतत् - मोक्षः आत्यन्तिकदुःखनिवृत्त्यात्मकः । आत्यन्तिकदुःखनिवृत्तिस्तु प्रकृतिपुरुषविवेकज्ञानेन सिध्यति । विवेकज्ञानं तु प्रकृतिज्ञानं विना न भवति । तस्मात् प्रकृतिज्ञानं प्रथमं सम्पादनीयम् । सांख्यवादी तु ईश्वरः करुणया लीलया वा सृष्टिं करोति इति मतं न मनुते । प्रकृतिप्रवृत्त्या एव भौतिकस्थूलकार्याणां ज्ञानं सुस्पष्टं भवति । अनन्तरं भौतिककार्येषु पुरुषस्य भेदज्ञानमुत्पद्यते । भूतकारणानि तन्मात्राणि, तन्मात्राणां प्रकृतिः अहङ्कारः इत्यादिषु पुरुषस्य भेदज्ञानं सम्पाद्यते । कारणपरम्परया स्थूलारुन्धतीन्यायेन मूलप्रकृतिस्वरूपात् पुरुषस्य विवेकज्ञान सुलभन साधितं भवति । पुरुषस्य विवेकज्ञान-सम्पादनमेव मोक्षः इत्युच्यते । उक्तं च सांख्यकारिकायाम्—

रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्यात् ।
पुरुषस्य अथात्मानं प्रकाश्य विनिवर्तते तथा प्रकृतिः ।। (सा.का.५९)

इति । एवं पुरुषस्य तत्त्वज्ञानेन प्रकृतिः निवृत्ता सती पुरुषस्य स्वरूप-दर्शनमेव मोक्षः इत्येतेषां राद्धान्तः ।

●



## ✻✻✻✻✻✻✻✻✻✻✻✻✻✻✻✻✻✻ ✻ चतुर्थोऽध्यायः - योगदर्शनम् ✻ ✻✻✻✻✻✻✻✻✻✻✻✻✻✻✻✻✻✻

### ४-१) योगशास्त्रम् :-

अस्य योगशास्त्रस्य रचयिता महर्षिः पतञ्जलिः। अयं पतञ्जलिः जीवः ईश्वरश्चेति तत्वद्वयं स्वीकरोति । अतः एव अस्य दर्शनस्य "सेश्वरसांख्यदर्शनम्" इति नामान्तरम् । अस्यैव शास्त्रस्यापरं नाम "सांख्यप्रवचनम्" इति । एतद्दर्शनं पतञ्जलिना प्रणीतत्वात् पातञ्जल-दर्शनम् इत्यपि व्यवहारयोग्यं भवति । यद्यपि पतञ्जलेः पूर्वाचार्याः हिरण्यगर्भयाज्ञवल्क्यादयः अनेके आचार्याः योगशास्त्रस्य प्रवक्तारः आसन्, अथापि जनसाधारणानां कृते पतञ्जलिरेव तं योगशास्त्रं सूत्र-रूपेण ग्रन्थीकृत्य सम्यक् सरलरीत्या व्याजहार इति हेतोः अस्य योगदर्शनस्य "पातञ्जलदर्शनम्" इति नाम सयुक्तिकं तिष्ठति ।

### २) योगशास्त्रपरिचयः :-

अस्मिन् योगशास्त्रे चत्वारः पादाः सन्ति । तेषां नामानि क्रमाद् भविष्यन्ति - समाधिपादः, साधनपादः विभूतिपादः, कैवल्य-पादश्चेति । प्रथमे पादे भगवान् पतञ्जलिः – "अथ योगानुशासनम्" (यो० सू० १-१) इति शास्त्रारम्भस्य प्रतिज्ञां करोति । अनन्तरं योगस्य परिभाषा अस्ति - "योगश्चित्तवृत्तिनिरोधः" (यो० सू० १-२) इति । चित्तवृत्तयः - प्रमाणविपर्ययविकल्पादयः । एतेषां निर्वर्तनं योगशब्दार्थः। समाधिशब्दस्यार्थः – सम्यक् आधानम् इति अर्थात् चितस्य स्वात्मस्वरूपे अवस्थापनमिति। योगवासिष्ठे सामाधिलक्षण-मेवमभिहितम्—

इमं गुणसमाहारमनात्मत्वेन पश्यतः ।
अन्तःशीतलता यस्य समाधिरिति कथ्यते ।।

इति । द्वितीये साधनपादे- "तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः" (यो०सू०२-१) इत्यादि सूत्रद्वारा चञ्चलचित्तपुरुषाणां तपःस्वाध्यायादि क्रियायोगः एवं यमनियमादिबहिरङ्गसाधनभूतानां तत्त्वानामुल्लेखः वर्णितः । अत्र तपः इति शब्देन चान्द्रायणादिक्लेशकारकस्य तपसः अर्थाविबोधो न भवति, यतः चान्द्रायणादयः शरीरे क्लेशजनकत्वात् तेन चित्तस्य ऐकाग्र्यं न तिष्ठति । अत्र तपःशब्दार्थः इत्थंभूतः भवति – हितकारकं स्वल्पं सात्विकभोजनं तथा शीतोष्णसुखदुःखादीनां सहनं एवमिन्द्रियाणां निरोधात्मकं यद्भवति तत्तपः इत्युच्यते । योगशास्त्रे तपः प्रसन्नकरणात्मकं वर्तते न तु पीडात्मकम् । स्वाध्यायस्यार्थः – मोक्षशास्त्राध्ययनम् या नियमपूर्वकं प्रणवादिजपानुष्ठानमिति । ईश्वर-प्रणिधानं नाम परमात्मनः अनुचिन्तनम् अथवा परमात्मनि सर्वकर्मणां समर्पणम् इति भवति । सर्वेषु क्रियायोगेषु ईश्वरप्रणिधानं नाम क्रियायोगः उत्तमः इति स्वीक्रियते । "यद्यत् कर्म करोमि तत्तदखिलं शम्भो तवाराधनम्"इति ईश्वरप्रणिधानयुक्तः पुरुषः सर्वकर्माणि ईश्वरार्पितसेवाबुध्या करोति इत्यादयः विषयाः प्रतिपादिताः । तृतीये विभूतिपादे – जन्मान्तज्ञानं, भूतभविष्यदर्थकं ज्ञानं, अन्तर्धानम् इत्यादि अनेकप्रकाराः सिद्धयः उपन्यस्ताः । चतुर्थे कैवल्यपादे - "जन्मोषधि-मन्त्रतपःसमाधिजाः सिद्धयः" ( यो० सू० ४-१ ) इति सूत्रेण पञ्चानां सिद्धीनां वर्णनं करोति । देवतानां सिद्धिः जन्मना एव जायते । एवं पक्षिणामाकाशे उड्डयनम्,पशूनां जलतरणमित्यादि जन्मतः एव प्रसिद्धः । ओषधेभ्यः सिद्धिः प्राप्यते । आयुर्वेद, रसेश्वरदर्शनादिषु सिद्धिरियं वर्णिता । मन्त्रेण एवं तपोबलेन सिद्धीनां प्राप्तिवर्णनं तन्त्रादिशास्त्रेषु मिलिष्यति । समाधेः सिद्धिः शास्त्रस्यास्य गौणविषयभूता भविष्यति । यमनियमादि अष्टाङ्गोपासनेन यदा योगवृक्षः फलति तदा पूर्णभावनया समाधिरूपफलपरिपकानन्तरं प्रकृति-पुरुषयोः भेदात्मकः साक्षात्कारः

सिध्यति। तदानीं असंगः पुरुषः स्वस्वरूपावस्थानेन तिष्ठतीति कृत्वा आत्यन्तिकदुःखविनाशरूपः मोक्षः सिध्यति।

अस्मिन् योगशास्त्रे षड्विंशतितत्त्वानि भवन्ति। यथा सांख्याभ्युपगतानि पञ्चविंशतितत्त्वानि, एतेषामतिरिक्तत्वेन एकः ईश्वरः अस्तीति ईश्वरतत्त्वमपि पतञ्जलिरयं स्वीकरोति इत्यतः अस्य नाम सेश्वरवादी सांख्यः इति। ईश्वरस्य लक्षणमेवं प्रतिपादयति पतञ्जलिः - क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः (यो० सू० १-२४) इति।

## ३) अथशब्दविचारः :-

"अथ योगानुशासनम्" इति सूत्रम्। अनेन सूत्रेण योगशास्त्रारम्भस्य प्रतिज्ञा कृता। सूत्रेऽस्मिन् पदद्वयं वर्तते। प्रथमपदेन अथशब्देन-

मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ।

इति आचार्यवचनानुसारं मंगलम्, अनन्तरम्, आरम्भः, प्रश्नः, कार्त्स्न्यम् इत्येते अर्थाः प्रतीयन्ते। अत्राथशब्देन आरम्भार्थः स्वीक्रियते। यतो हि शब्दार्थत्वेन स एव स्वीक्रियते यस्यान्वयः वाक्यार्थे भवति। प्रकृते अथशब्देन मंगलार्थः न स्वीक्रियते। कुत इति चेत् अनिन्दितार्थप्राप्तिरेव मङ्गलशब्दार्थः। दुःखनिवृत्तिरूपसुखप्राप्तिरेव सर्वैः इष्यते। योगानुशासनेन सुखदुःखयोः परिहारः न भवति। तस्मात् योगानुशासनम् मङ्गलम् इत्यर्थकरणं सर्वथा असङ्गतम्। अपिच मङ्गलत्वेन अथशब्दस्योच्चारणं क्रियते चेत् तर्हि तस्य कार्यं श्रवणात्मकं भवति न तु वाच्यार्थः। एवमेव अथशब्दस्य अन्येऽप्यर्थाः न भवन्ति।

ननु प्रारिप्सितग्रन्थस्य निर्विघ्नेन परिसमाप्त्यर्थं ग्रन्थारम्भे मंगलकरणमस्माकं शिष्टाचारसम्प्रदायः। चोक्तं पतञ्जलिना अपि-

मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते
वीरपुरुषाणि च भवन्त्यायुष्मत्पुरुषाणि च अध्येतारश्च
मङ्गलयुक्ताः यथा स्युरिति मङ्गलमाचरणीयम्।

इति। अतः अथशब्देन मंगलार्थ एव बोध्यते इति चेत् - न। देवालय

निर्माणार्थं प्रयुक्तपुरुषदर्शनेन अन्यस्य यथा मङ्गलम्,एवमेव क्षेत्रपर्यटनान्निवृत्तपुरुषदर्शनेन पङ्गुपुरुषस्य यथा मङ्गलं तथा आरम्भार्थत्वेन प्रयुक्ताथशब्दश्रवणमात्रेण मंगलमपि भवतीति सिद्धम् । चोक्तं साम्प्रदायिकैः—

ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥

इति । मांगलिकौ - मंगलवाचकौ इति न, किन्तु मांगलिकौ - मंगलं प्रयोजनमस्य इति व्युत्पत्त्या प्रयोजनार्थे ठञ् प्रत्ययेन मंगलप्रयोजनवान् इति अथशब्दार्थः । वितरस्तु आकरग्रन्थादवलोकनीयः ।

## ४) योगशब्दविचारः :-

शास्त्रेऽस्मिन् अनुशासनेन वर्तमानं यत् योगपदं तस्य लक्षणं किमिति आक्षेपे पतञ्जलिः वदति - "योगश्चित्तवृत्तिनिरोधः" (यो०सू० १-२) इति । चित्तस्य याः सन्ति बहिर्मुखवृत्तयः तासां निरोधः योग० शब्दस्य वाच्यार्थः । अत्रायं प्रश्नः - 'युजिर्योगे' इति धातुना योगशब्दस्य निष्पत्तिमत्वात् योगस्य संयोगार्थः वक्तव्यः न तु निषेधार्थः । याज्ञवल्क्योऽपि एवं मनुते यत् जीवात्मपरमात्मनोः यस्संयोगः सः एव योगः इति । चोक्तं तेन—

संयोगो योग इत्युक्तः जीवात्मपरमात्मनोः ।

इति । तस्मात् योगः संयोगार्थकः इत्यागते सति समाधत्ते पतञ्जलिः- प्रकृतयोगशब्दः संयोगार्थकः न भवति । यतः जीवात्मपरमात्मनोः संयोगे किमपि कारणं नास्ति । संयोगे कारणत्रयं तिष्ठति — अन्यतरकर्म, उभयकर्म, संयोगः इति । कारणत्रयेष्वन्यतमसंयोगेऽपि त्रयः प्रकाराः सन्ति - अन्यतरकर्मजम्, उभयकर्मजम्, संयोगजम् इति । पदार्थद्वयोः एककर्मसंयोगः अन्यतरकर्मजः । यथा- वृक्षपक्षिसंयोगः । अत्र केवलं एकपक्षिकर्मणा संयोगो भवति । यत्र द्वाभ्यां यस्संयोगः सः उभयकर्मजः । यतः अत्र मल्लयुद्धे द्वाभ्यां कर्मणा एव संयोगः जन्यते । संयोगेन यः सयोगः उत्पद्यते सः संयोगजः । यथा—

हस्तपुस्तकसंयोगः। हस्तपुस्तकसंयोगेन शरीरपुस्तकयोः यस्संयोगः सः संयोगजः भवति। प्रकृते तु जीवात्मा एवं परमात्मा द्वावपि व्यापकौ। व्यापकत्वकारणात् तयोः चलनादिक्रिया न तिष्ठति, क्रियां विना संयोगः एव न भवति । अतः तयोर्मध्ये कोऽपि संयोगः स्वात्मत्वं न भजते, कारणान्तराभावात् इति। एवं नैयायिकाः वैशेषिकाश्च व्यापकभूतयोः पदार्थद्वययोः संयोगः न तिष्ठति इति पक्षममुं समर्थयन्ति । "धातूनामनेकार्थाः" इति सर्वैः स्वीकृतत्वात् "युज" धातोः समाध्यर्थः भवितुं न काऽपि विप्रतिपत्तिः। चोक्तम्—

निपाताश्चोपसर्गाश्च धातवश्चेति ते त्रयः।
अनेकार्थाः स्मृताः सर्वे पाठस्तेषां निदर्शनम्॥

इति। तस्मात् योगः इति शब्दस्य समाध्यर्थस्वीकारः एव समुचितः। प्रतिपादितं चैवं याज्ञवल्क्येन—

समाधिः समतावस्था जीवात्मपरमात्मनोः।
ब्रह्मण्येव स्थितिर्या सा समाधिरभिधीयते॥

इति। अस्याः समाधिरूपावस्थायाः सम्यक् प्राप्त्यर्थं भगवान् पतञ्जलिः योगशास्त्रस्योपदेशं कृतवानिति बोद्धव्यम्।

## ५) योगाङ्गसमाधिविचारः :-

ननु योगश्चित्तवृत्तिनिरोधः इति सूत्रानुसारं चित्तवृत्तिनिरोधः योगः इत्युक्तः, न तु योगशब्देन समाधिः । यदि समाधिः चित्तवृत्तिनिरोधभिन्ना तर्हि पूर्वापरविरोधः। यदि समाधिः चित्तवृत्तिनिरोधात्मिका तर्हि "यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि" (यो० सू० २-२९) इति पतञ्जलिसूत्रेण विरोधः। यतः सूत्रेऽस्मिन् समाधिः योगाङ्गत्वेन कथिता। यदि समाधिः योगाङ्गभूता भवति तर्हि उपकार्योपकारकभावः आपद्यते। यदि उपकार्योपकारकभावस्तयोः तर्हि आश्रयोऽपि भिन्नः स्यात् । तस्मात् समाधिः न योगरूपा इति चेत् - उच्यते।

यद्यपि समाधि: योगाङ्गत्वेन वस्तुत: योगाद्भिन्ना तथापि अ'गाङ्गिनो: अभेदमारोप्य भाष्यकार: योग: समाधि: इति एकार्थकत्वेन कथितवान्। वस्तुत: अष्टांगेषु अन्तिमावयवत्वेन समाधिः कथिता। "तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधि:" (यो० सू० ३-३) इति पतञ्जलिना समाधिस्वरूपनिरूपण' कृतम् । सूत्रगततत्पदेन - "तत्र प्रत्यैकतानता ध्यानम्" (यो० सू० ३-२) इति सूत्रोक्तस्य ध्यानस्य ग्रहणं क्रियते। मात्रपदेन सूत्रकार: स्वरूपशून्यमिव इत्यर्थमनुसन्धत्ते। तथा च यदा ध्यानं ध्येयैकगोचरत्वेन भवति तदा ध्याता ध्यानभावश्चात्यन्तशून्यत्वमापद्यते । तदानीं केवलं ध्येयमात्रगोचरत्वं तिष्ठति। अस्मिन् समये ध्यान सदपि ध्याता-ध्यानं-ध्येयः इत्यादिविभागग्रहणाभावात् स्वरूपशून्यं भवति । इयमेवावस्था समाधिरित्युच्यते । चोक्तं पञ्चदश्यां विद्यारण्येन—

ध्यातृध्याने परित्यज्य क्रमाद् ध्येयैकगोचरम्।
निर्वातदीपवच्चित्तं समाधिरभिधीयते ।। (पञ्च० १–५५)

इति। अपिच योगः समाधि: इति वक्तव्ये न कोऽपि विरोधः । यत: समाधिशब्दस्य अनेकार्था: सन्ति। समाधानं समाधि: इति भावसाधनव्युत्पत्त्या अगीभूतयोगरूपसमाधे: ग्रहणं क्रियते । एवं समाधीयते अनेनेति समाधिः इति करणसाधनव्युत्पत्त्या च योगरूपसमाधेः ग्रहणं भवति। एवं द्विधा समाध्यर्थनिवचनं सूत्रकारेणैव प्रस्तुतम्।

अन्यच्च - 'स एव सबीजः समाधि:" (यो० सू० १-४६) एवमेव तस्यापि 'निरोधे सर्वनिरोधान्निर्बीज: समाधिः" (यो० सू० १-५१) इति च सूत्रद्वयेन अङ्गीभूतयोगार्थे एव समाधिशब्दप्रयोगः कृतः इति सिद्धं भवति । तस्मात् योगः समाधि: इति भाष्यवचनं सर्वसमञ्जसम्। चोक्तं स्कन्दपुराणे—

यत्समत्वं द्वयोरत्र जीवात्मपरमात्मनोः ।
संनष्टसर्वसङ्कल्पः समाधिरभिधीयते ।।
परमात्मात्मनोर्योऽयमविभागः परन्तप ।
स एव तु परो योग: समासात्कथितस्तव ।। इति।

## ६) आत्मनः अपरिणामित्वविचारः :-

यदि चित्तवृत्तिनिरोधत्वेन योगशब्दार्थः आद्रियते तर्हि अयं प्रश्नः उदेति यत् आत्मा कूटस्थ इति शास्त्रसिद्धस्य अस्य स्वरूपस्य व्याघातः स्यात्। यतो हि "प्रमाणविपर्ययविकल्पनिद्रास्मृतयः" (यो० सू० १-६) इति सूत्रानुसारं पञ्च वृत्तयः भवन्ति। अज्ञातार्थनिश्चयात्मिका वृत्तिः प्रमाणत्वेन कथ्यते। मिथ्याज्ञानवृत्तेः विपर्यय इत्युच्यते। बाह्यार्थरहिता केवलकल्पनामयी आहार्यज्ञानरूपा या प्रतीतिः सा विकल्पपदेनोच्यते। निद्रास्मृती प्रसिद्धे स्तः। एतासां वृत्तीनां निरोधः योगः इति गीयते। निरोधशब्दार्थः नाशः इति। यः वृत्त्याश्रयः वृत्तिनाशेन तस्यापि नाशः इति लोके सुस्पष्टः। वृत्तिः ज्ञानरूपत्वात् ज्ञत्वाश्रयत्वेन आत्मा तिष्ठति। आत्मनि जायमानाः वृत्तयः निरोधात्मकविनाशवत्त्वं प्राप्नुवन्ति तदा वृत्त्याश्रयभूते आत्मनि अपि प्रकारात्मकविकारोत्पत्तिमवश्यं जनयन्ति। यतः "उपयन्नपयन् धर्मो विकरोति हि धर्मिणम्" (न्या० सा० सि० वि०) इति न्यायवाक्यानुसारं भवति धर्मे विकारेऽवश्यं धर्मिणि अपि विकारः समुत्पद्यते। तस्मात् सर्वतन्त्रसिद्धस्य आत्मनः कूटस्थत्वं, अविकारित्वं, अपरिणामित्वमित्यादि वाक्यानि भज्येरन्। कूटस्थनिर्वचनं तु – कूटेन मूलस्वरूपेण सदा तिष्ठति इति कूटस्थः इति कृतत्वात् कूटस्थः निर्विकारः इति सिद्धे सति इदानीमात्मनि विकारत्वमापद्येत इति।

अस्योत्तररूपेण एवमभिधीयते - अयं प्रश्नः तत्र भवति यत्र प्रमाणादिवृत्तयः आत्मधर्मत्वेन स्वीक्रियन्ते। परन्तु वस्तुत प्रमाणादयः न आत्मधर्माः एते तु चित्तधर्माः इति कथ्यन्ते। ज्ञानं तु अन्तःकरणस्य परिणामविशेषात्मकमस्ति। बुद्धिवृत्तौ विषयाकारकत्वेन यस्य समर्पणं तदेव विषयज्ञानमित्युच्यते। विषयाकारत्वेन उपरक्ता या बुद्धिवृत्तिः सा एव चिच्छक्तिः, अर्थात् सा आत्मनि प्रतिबिम्बिता भवति। आत्मनि या प्रतिबिम्बिता सा एव प्रतिबिम्बनसामर्थ्यवृत्तिविशिष्टा चित्तवृत्तिः भवति। तदानीमात्मनि बुद्धिशक्तेः एवं चिच्छक्तेः च भेदप्रतीतेरभावात्

बुद्धिवृत्यभिन्नात्मनः अनुभवः जायते, एवं लोके व्यवहारः । यथा जलदर्पणादिषु प्रतिबिम्बितः पुरुषः तद्वान् भवति तद्वदत्रापि इति द्रष्टव्यम् । तस्मात् ज्ञानं न आत्मधर्मत्वेन स्वीक्रियते, ज्ञानस्वरूपः आत्मा इति कथनात् ।

पुनश्च शङ्का उदेति यत् नैयायिकमतानुसारमात्मनि गुणाः कल्प्यन्ते- सुखदुःखेच्छाद्वेषादि । अवस्थायामस्यां आत्मनः कूटस्थत्वभङ्गः इति । अस्याः समाधानम्- यदि आत्मा निर्विकारः, अपरिणामी, कूटस्थः इति निश्चीयते तर्हि केनापि प्रकारेण ज्ञानमात्मगुणेन स्वीकर्तुं न शक्यते । यतः यद् विषयाकारात्मकं ज्ञानं तदाकारसदृशं आकारपरिणामात्मकं ज्ञानं समुत्पद्यते । एतादृशपरिणामित्वेन आत्मा अस्ति इति नैयायिकोऽपि न मनुते, कुतः इति चेत् यदि आत्मा परिणामी इति कथ्यते तर्हि आत्मा अनित्य इति भविष्यति । आत्मा अनित्य इति आस्तिकैः न चिन्त्यते । तस्मात् आत्मा अपरिणामी इति सिद्धम् ।

### ७) परिणामविचारः :-

परिणामस्त्रिविधः — धर्मपरिणामः, लक्षणपरिणामः, अवस्थापरिणामश्चेति । धर्मे पूर्वधर्मतिरोभावेन धर्मान्तरप्रादुर्भावः धर्मपरिणामः । यथा- चितः तत्तद्विषयाकारात्मिकाः अनेकाः वृत्तयः चिद्धर्माः इति कथ्यन्ते । तेषु धर्मेषु नील आलोचनरूपात्मिका या चित्तवृत्तिः तस्याः तिरोभावेन विषयान्तरवृत्तेः प्रादुर्भावः भवति । यथा- सुवर्णे कटकधर्मतिरोभावेन मुकुटधर्मप्रादुर्भावः इतिवत् । अत्र उत्पत्तिशब्दप्रयोगे तिरोभावाविर्भावार्थप्रयोगः कृतः । योगाचार्याः सत्कार्यवादिनः इति सिद्धान्तेन कस्यापि वस्तुनः उत्पत्तिनाशौ भवतः इति न स्वीकुर्वन्ति ।

विद्यमानधर्मेषु लक्षणमेकं त्यक्त्वा लक्षणान्तरस्वीकरणेन यः परिणामः सः लक्षणपरिणामः । अत्र लक्षणपदेन भूतभविष्यद्वर्तमानत्रयं गृह्यते । अत्र धर्मसमानत्वेन विद्यमानलक्षणस्यैव आविर्भावतिरोभावौ भवतः । अनेनैव कारणेन सत्कार्यवादसिद्धान्तः उत्पन्नः । लक्षणेषु त्रिषु प्रत्येकस्मिन् क्षणे धर्मतारतम्यं तिष्ठति । लक्षणत्रयाणां

तारतम्यं लक्षणयुक्तधर्मे एव द्रष्टव्यः, यतः तत्रैव भविष्यति ।

वर्तमानं यल्लक्षणं तस्य अवस्थान्तरं त्यक्त्वा अन्यावस्थायां परिणामत्वेन वर्तमानत्वं नाम - अवस्थापरिणामः । सत्त्वादिगुणानामतिचञ्चलस्वभावकारणात् प्रतिक्षणं तेषां परिणामः चलन् तिष्ठति । अयं परिणामः अनुमानेन सिध्यति । अयमवस्थापरिणामः वर्तमानकाले स्फुटतया प्रतिभाति । अमुं दृष्टान्तीकृत्य भूतभविष्यत्कालयोः अयं परिणामः अनुमीयते । एते सर्वे विचाराः धर्मी एवं धर्मः तयोः लक्षणावस्थासु यः काल्पनिकः भेदः तमाधारीकृत्य क्रियन्ते । वस्तुतः सर्वे परिणामाः धर्मिणि एव भवन्ति इति विविच्य ज्ञातव्यम् ।

## ६) सम्प्रज्ञातसमाधिः :-

"वितर्कविचारानन्दास्मितारूपानुगमात् सम्प्रज्ञातः" (यो० सू० १-१७) इति सूत्रानुसारं सवितर्का, सविचारा, सानन्दा, सास्मिता इति सम्प्रज्ञातसमाधिः चतुर्धा भिद्यते । समाधिशब्दार्थः भावना भवति । यस्य वस्तुनः भावना क्रियते तद्वस्तु भाव्यं, भावनीयं अथवा ध्येयं इति कथ्यते । तस्य ध्येयस्य विषयान्तरपरिहारपूर्वकत्वेन वारंवारं चिति निवेशनात्मिकायाः क्रियायाः भावना इति संज्ञा । अथवा विषयान्तरेषु संलग्नं चित्तं तद्विषयादपसार्य ध्येयभूते पदार्थे स्थिरीकरणं नाम भावना इत्यभिधीयते ।

भाव्यं द्विविधम् - एकः ईश्वरः, एकं तत्त्वम् । तत्त्वं द्विविधम्- जडात्मकम्, अजडात्मकम् चेति । अजडात्मकभाव्यत्वेन जीवात्मा स्वीक्रियते । ईश्वरः तत्त्वपृथक्त्वेन गणितः । प्रकृत्यादीनि चतुर्विंशतितत्त्वानि एकः पुरुषः इति योगशास्त्रे पञ्चविंशतितत्त्वानि, ईश्वरस्तु तत्त्वातीतः इति स्वीक्रियते । ईश्वरसहितानि सर्वाणि च तत्त्वानि भाव्यत्वेन कथ्यन्ते । एतेषां तत्त्वानां भावनया परमलक्ष्यभूतसमाधेः सिद्धिः भवति । भावनायाः अस्याः प्रकारभेदेन सम्प्रज्ञातसमाधिरपि चतुर्धा भिद्यते इत्युक्तम् ।

एकाग्रचिति बाह्यविषयाणां चित्तवृत्तीनां निरोधः यस्यां विशेषावस्थायां भवति सा सम्प्रज्ञातसमाधिः । अस्मिन् सम्प्रज्ञातसमाधौ केवलबाह्यविषयकचित्तवृत्तीनामेव निरोधः, न तु आत्मविषयकसात्विक-चित्तवृत्तीनां निरोधः क्रियते । अतः अयं समाधिः सुषुप्त्यवस्थापेक्षया भिन्नः । सुषुप्त्यवस्थायां तु सकलवृत्तीनां निरोधः भवति । अतः इयमवस्था योगः इति नोच्यते । सम्यक् ज्ञायते प्रकृतेः भेदेन ध्येयस्वरूपं यस्मिन् इति व्युत्पत्त्या सम्प्रज्ञातसमाधिः सिध्यति । यस्यामवस्थायां ध्येयभूतस्य आत्मनः ज्ञानं सम्यग्रूपेण प्रकाशते सा सम्प्रज्ञातसमाधिः एवं व्युत्पत्तिकरणेन सम्प्रज्ञातसामाध्यवस्थायां आत्मविषयकसात्विक-वृत्तेः भावत्वं सिध्यति ।

(१) सवितर्कसमाधिः- स्थूलविषयकसाक्षात्कारः वितर्कः इत्युच्यते । विशेषेण तर्कणम्, शब्दार्थज्ञानविकल्परूपं यत्र सः वितर्कः । अनया व्युत्पत्त्या स्थूलविषयभावना एव वितर्कः इति सिध्यति । स्थूलविषये शब्दार्थयोः ज्ञानं अभेदेन भासते । अयं भावः- भावनायां विषयभूतं यद् भाव्यं तत्त्रिविधं भवति- ग्राह्यं, ग्रहणं गृहीता इति । तत्र ग्राह्यं द्विविधम्-स्थूलसूक्ष्मभेदेन । स्थूलां ध्येयविषयिणीं भावनां दृढीकृत्यैव अनन्तरं सूक्ष्मविषयिकी भावना आगच्छति । यथा - परीक्षोपाधिप्राप्त्यर्थं प्रथमतः स्थूलभूतमध्ययनं कृत्वा अनन्तरं सूक्ष्मविषयकात्मकम् मननं क्रियते तद्वत् योगेच्छुः प्रथमतः ध्येयत्वेन वर्तमाने स्थूलविषये भावनां दृढीकृत्य अनन्तरं शनैः शनैः ध्येयात्मकसूक्ष्मविषयस्य भावनायामभ्यासं करोति । अथ च सूक्ष्मतर, सूक्ष्मतम, एवं परमलक्ष्यपर्यन्तं गन्तुं चेष्टां करोति । दशायामस्यां स्थूलपञ्चभूतानां भावना अथवा पाञ्चभौतिक-चतुर्भुजादिस्थूलशरीरभावना, एवं स्थूलभूतकारणानि यानि सूक्ष्माणि पञ्चतन्मात्राणि तेषां भावना, तेषां पूर्वापरानुसन्धानपूर्वकत्वेन प्रथमतः सामान्यवादविशेषः तदा धर्मधर्मिणोः या भावना सा सवितर्का अथवा वितर्कानुगता इति कथ्यते ।

(२) सविचारसमाधिः- एवमेव यदा स्थूलविषयाणां यथार्थानुभवः, तदा तेषु स्थूलाकारदृष्टिं त्यक्त्वा अनित्यत्वादिदोषाणां विचारः यदा

तदा सविचारात्मिका इत्युच्यते । स्थूलपदार्थानामनुगतकारणत्वेन यानि अहङ्कारमहत्तत्वप्रकृतिरूपाणि सूक्ष्मतत्त्वानि तेषां भावनया भवति यः साक्षात्कारः, एवं तेषु अहङ्कारादिषु वर्तमानाश्रुतपूर्वादिविशेषधर्माणां देशकालानुसारं क्रियमाणभावनया यः साक्षात्कारः सः विचारः भवति । विशेषेण चारः सूक्ष्मवस्तुपर्यन्तः सञ्चारो यत्र अनया व्युत्पत्त्या कस्यां समाध्यवस्थायां सूक्ष्मवस्तुपर्यन्तं चित्तस्य सञ्चारो भवति सा अवस्था सविचारसमाधिरित्युच्यते ।

(३) सानन्दसमाधिः– सविचारसमाधौ स्थूलविषयाणां यथार्थसूक्ष्मदृष्टिरुदेति, यतः सूक्ष्मतत्त्वं कारणरूपेण तेषु स्थूलविषयेषु तिष्ठति, कार्यकारणयोरभेदात् । अनन्तरं सूक्ष्मविषयिकदृष्टावपि अनित्यत्वादिदोषदर्शनकारणेन तान् सूक्ष्मतत्त्वान् त्यक्त्वा चतुर्विंशतितत्त्वेषु अनुगतसत्त्वगुणकार्यस्य फलं यत्सुखं तत् रजोगुणतमोगुणलेशेन अभिभूतत्वात् चितिशक्तेः तिरोभावः, एव तस्मिन् प्रवतमानया भावनया मनोराज्यसदृशं यत् काल्पनिकं वैषयिकं सुखं तस्य साक्षात्कारः स एव आनन्दः इति गीयते । आनन्दसहितत्वेन यः समाधिः सः सानन्दसमाधिः । यद्यपि सुखसदृशत्वेन सर्वत्र दुःखमोहौ अनुगतौ भवतः तथापि तयोः दुःखमोहयोः स्वभावतः सर्वैः द्विष्यमानत्वेन हेयत्वबुध्या च भावना आवश्यकत्वेन नानुष्ठीयते ।

(४) सास्मितसमाधिः– अनन्तरं अनुभूयमानत्वेन स्थिते अस्मिन्नपि सुखे क्षणिकत्वानित्यत्वादिदोषान् संभाव्यमानान् तान् दृष्ट्वा तत्रापि वैराग्यं लब्ध्वा जीवेश्वरयोः स्वरूपत्वेन जडभिन्नात्माकारात्मकः यः साक्षात्कारः सा भावना अस्मिता भवति । अस्यां भावनायां रजोगुणतमोगुणलेशेन अनभिभूतः यः शुद्धसत्त्वगुणः तस्य तिरोभावः एवं चितिशक्तेराविर्भावः भवति । तदा 'अस्मि' इति आकारः तिष्ठति इति हेतोः अस्याः अवस्थायाः सास्मितावस्था इति नाम । अस्मिन् समाधौ प्रथमतः जीवात्मविषयिका अस्मिता भवति, अनन्तरं सूक्ष्मतमविषयिका अस्मिता इति विवेकः । प्रथमायाः अस्मितायाः विषयः

जीवात्मा अस्ति, द्वितीयायां तु भावनात्मकविशेषाणां दृढतराभ्यासेन केवलः परमात्मा एव विषयत्वेन तिष्ठति । इयमवस्था चित्तस्य अन्तिमावस्था । अनन्तरमेतत्तत्वातिरिक्तत्वेन ज्ञानव्यत्वेनावशिष्टं किमपि नास्ति । एतद्रूपानुगतसमाधेः नाम सास्मितसमाधिरिति । अस्मिन् समाधौ संस्कारमात्रं शेषत्वेन तिष्ठति । एवं चतुःप्रकारात्मिका सम्प्रज्ञातसमाधिः विवेचनीया ।

## १०) असम्प्रज्ञातसमाधिः :-

यस्यामवस्थायां सकलवृत्तीनां निरोधः भवति, तस्याः अवस्थायाः असम्प्रज्ञातसमाधिरित्युच्यते । अस्यां दशायां न कापि वृत्तिः अवशेषत्वेन तिष्ठति । सम्प्रज्ञातासम्प्रज्ञातयोः अयं विशेषः यत् सम्प्रज्ञाते तावद् प्रकृति-पुरुषयोः भिन्नताख्यातिलक्षणात्मिका विशुद्धसत्वप्रधाना वृत्तिः तिष्ठति, तस्याः निरोधः न भवति । असम्प्रज्ञाते तु तस्याः वृत्तेरपि निरोधः जायते । अस्यामवस्थायां यः संस्कारः अतिष्ठत् तस्यापि निरोधः उत्पद्यते । सुषुप्ति-प्रलययोः योगलक्षणस्य अतिव्याप्तिनिवारणाय सम्प्रज्ञातसमाधौ अव्याप्तिदोषनिवारणाय असम्प्रज्ञातसमाधौ निरोध-विशेषणत्वेन क्लेशादिपरिपन्थी इति पदं दत्तम् । क्लेशाः पञ्च प्रकाराः । भणितं च पतञ्जलिना - "अविद्याऽस्मितारागद्वेषाभिनिवेशाः क्लेशाः" (यो० सू० २-३) इति । अविद्या, अस्मिता, रागः, द्वेषः, अभिनिवेशः इति ते भवन्ति पञ्च ।

## ११) अविद्याविचारः :-

विद्यायाः अभावः अविद्या इति व्युत्पत्त्या "निर्मक्षिकम्" इत्यत्र अव्ययीभावसमासेन मक्षिकानामभावः यथा प्रतीयते तथा पूर्वपदप्रधान-ग्रहणेन अविद्या पदशब्दार्थः विद्याभावः इति सिध्यति । अथवा न विद्या अविद्या इति विग्रहे नञ् तत्पुरुषसमासः प्रयुज्यते तर्हि विद्याविरोधित्वेन अन्यः अर्थः उच्यते । यथा - अब्राह्मणः, अराजपुरुषः इत्यादिषु । एतादृशस्थलेषु उत्तरपदार्थः प्रधानः भवति । उत वा अविद्यमाना विद्या

यस्याः यस्यां वा इति अविद्याशब्दस्य बहुव्रीहिसमासः क्रियते तदा अन्यपदार्थः प्रधानभूतः भवति । अर्थात् यस्यां विद्यायाः अभावः इति विचार्यमाणे बुद्धौ विद्यायाः अभावात् अविद्याशब्दवाच्यार्थः बुद्धिः इति सिध्यति । आगतेषु त्रिषु प्रकारेषु कः प्रकारः अविद्याशब्दस्य श्रेयः इति सन्दिह्य एतेषु कोऽपि प्रकारः न समीचीनः भवति इति पूर्वपक्षी स्वमतं व्याचष्टे । यथा – अविद्यापदनिर्वचने यः कृतः अव्ययीभावसमासः सः न समीचीनः । यतो हि अविद्या इति शब्दे पूर्वपदार्थः प्रधानत्वात् नञा प्रसज्यप्रतिषेधार्थः क्रियते । तथाच अविद्याशब्देन विद्यायाः प्राप्ति-पूर्वकाभावः एव कृतः न तु भावरूपस्यान्यस्य । अस्यामवस्थायां विद्यायाः अभावरूपाविद्या क्लेशादीनामुत्पादने न सामर्थ्यवती भवति । यतः अभावेन न कस्यापि उत्पत्तिर्भवति । अव्ययीभावसमासकरणेन अन्योऽपि दोषः जाग्रति यत् अविद्याशब्दः स्त्रीलिङ्गवाची इत्येव न सम्भवति । "अव्ययीभावश्च" इति पाणिन्यनुसारं "निर्मक्षिकवत्" नपुंसकत्वमापद्येत ।

एवमेव अविद्यायाः तत्पुरुषसमासोऽपि न भवति । कुतः ? तत्पुरुषे सति उत्तरपदार्थः विद्याशब्दः प्रधानः, एवं नञर्थः अभावः । अस्यां स्थितौ अभावयुक्तविद्या एव अविद्याशब्दार्थः स्यात् । एवमेव रागद्वेषाद्यभावेन युक्ता या विद्या सा क्लेशादीनां नाशकर्त्री न भवति इत्ययं सर्वतन्त्रसिद्धान्तः जागर्ति । अतः अयमपि पक्षः न समीचीनः ।

अविद्याशब्दे बहुव्रीहिसमासकरणेऽपि योऽर्थः सिध्यति तेन अविद्या क्लेशादीनां कारणीभूता इत्यर्थावबोधो न जायते । तत्र कारणम् – बुद्धिः अभावमात्रेण क्लेशादीनामुत्पादिका नास्ति । विद्यायाः अभावेन कियत्पर्यन्तं विपरीतबुद्धिः न उदेति तावत्पर्यन्तं कस्यापि क्लेशप्रकारस्य सम्भावना एव न भवति । चोक्तं पतञ्जलिना— "अविद्याक्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम्" ( यो० सू० २-४ ) इति । उक्तं च योगभाष्यटीकाकारेण वाचस्पतिमिश्रेण –

प्रसुप्तस्तत्वलीनानां तन्ववस्थाश्च योगिनाम् ।
विच्छिन्नोदाररूपाश्च क्लेशाः विषयसङ्गिनाम् ।।

(यो.भा.वा.टी.-४)

इति । तस्मात् तृतीया व्युत्पत्तिरपि न·समीचीना इति जाते पूर्वपक्षे सिद्धान्ती प्रतिसन्धत्ते ।

अविद्यापदस्थनञ्पदेन पर्युदासार्थः स्वीक्रियते । विद्यायाः सह नञ्समासकरणेन विद्याविरोधी इति विपरीतज्ञानार्थबोधो जायते । भणितं च—

नामधात्वर्थयोगे तु नैव नञ् प्रतिषेधकः ।
वदन्त्यब्राह्मणाधर्मावन्यमात्रविरोधिनौ ॥
वृद्धप्रयोगगम्यो हि शब्दार्थः सर्व एव नः ।
तेन यत्र प्रयुक्तो यो न तस्मादपनीयते ॥

इति । श्लोकः स्पष्टार्थः । तस्मात् नामार्थधात्वर्थभूते योगे नञः निषेधार्थप्रतीतिर्न भवति, अपितु पर्युदासार्थः इति सिद्धम् । वाचस्पति-मिश्राः अपि– "अनित्याशुचिदुःखानात्मसु नित्यशुचिः-सुखाऽऽत्मख्याति-रविद्या" (यो० सू० २-५) इति सूत्रभाष्यव्याख्यानावसरे एवमलिखन्—

लोकाधीनावधारणो हि शब्दार्थयोः सम्बन्धः। लोके चोत्तर-पदार्थपिधानस्यापि नञः तत्पुरुषस्य उत्तरपदाभिधेयोपमर्दकस्य तल्लक्षिततद्विरुद्धपरतया तत्र तत्रोपलब्धेरिहापि तद्विरुद्धे वृत्तिरिति ।

इति । एवम्भूतायाः अस्याः अविद्यायाः पादचतुष्टयरूपेण स्थास्यन्ति – अस्मितारागद्वेषाभिनिवेशाः । अस्मितायाः स्वरूपं परिभाषारूपेण पतञ्जलिना लिखितम्— "दृग्दर्शनशक्त्योरेकात्मतैवास्मिता" (यो० सू० २-६) इति । अर्थात् यदा अनात्मभूतायां बुद्धौ आत्मबुद्धिरूपाविद्या भवति तदा सा अस्मिता भवति । येषु सुखसाधनेषु विषयेषु तृष्णा जायते सा एव रागः इत्युच्यते । एवमेव दुःखसाधनेषु या जिहासा उत्पद्यते सा द्वेष इति कथ्यते । एतयोः स्वरूपनिर्वचनं पतञ्जलिना सूत्ररूपेण प्रतिपादितम्- "सुखानुशायी रागः" (यो० सू० २-७) "दुःखानु-शायी द्वेषः" (यो० सू० २-८) इति । पूर्वजन्मनि अनुभूतं मरणजन्यं यद्दुःखं, तदनुभवजन्या या वासना, तस्मात् विना कारणेन स्वभावतः एव उत्पत्स्यमानं यन्मरणभयं तत् अभिनिवेशत्वेन उच्यते । सूत्रेण

चास्य स्वरूपप्रतिपादनं कृतम् – "स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः" (यो० सू० २-९) इति । एते अविद्यादयः पञ्च अनेकप्रकारेण सांसारिकदुःखानां कारणत्वात् मनुष्यस्य क्लेशदायकाः भवन्ति ।

तस्मात् क्लेशादिपरिपन्थिघटितायाः चित्तवृत्तेः निरोधः एव असम्प्रज्ञातसमाधिः इति सुविदितम् ।

## १२) निरोधलक्षणम् :-

अभावार्थसूचकत्वेन निरोधः नाभिधीयते । निरोधस्य फलं भवति – "आत्मसाक्षात्कारः" । वृत्तिनिरोधः नाम न वृत्त्यभावः । यस्मात् अभावः न कस्यापि कारणत्वेन कथ्यते । निरोधस्तु आत्मसाक्षात्कारे कारणीभूतः इति कथनात् निरोधः अभावरूपो न भवति ।

वस्तुतः निरोधार्थः चित्तस्य अवस्थाविशेषार्थकः । यस्य मधुमती, मधुप्रतीका, विशोका, ज्योतिष्मती इत्यादिना व्यवहारः कृतः स एव निरोधार्थः । सवितर्कसमाधौ उत्पाद्यमाना या चित्तवृत्तिः, अस्याः अवस्थाविशेषायाः मधुमती इति नाम । सविचारसमाधौ जायमानचित्तावस्थाविशेषरूपाः मधुप्रतीका इति । सानन्दसमाधौ वर्तमानायाः चित्तावस्थायाः नाम भवति विशोका इति । सास्मितसमाधौ अनुभूयमानायाः चित्तावस्थायाः कथनं ज्योतिष्मती इति । एतासामवस्थानामभिधानमेव निरोधः इति । एताः अवस्थाः भावस्वरूपत्वात् एताभिः ध्येयस्य साक्षात्कारः भविष्यति इति सङ्गतं वचनम् । यतो हि – निरूध्यन्ते प्रमाणाद्याः चित्तवृत्तयः यस्मिन् अवस्थाविशेषे इति व्युत्पत्त्या, नि उपसर्ग रुध् धातुना अधिकरणे घञ् प्रत्ययकरणेन उक्तावस्था एव निरोधशब्दवाच्यार्थत्वेन सिध्यति इति निरोधलक्षणम् ।

## १३) निरोधस्योपायः :-

अभ्यासेन वैराग्येन च चित्तवृत्तेः निरोधः भवति । सूत्रमेतत् "अभ्यासवैराग्याभ्यां तन्निरोधः" (यो० सू० १·१२) इति । चित्तवृत्तेः

प्रवाहः निम्नभूतत्वात् इयं चित्तवृत्तिः विषयाणामनुगमनं करोति । यावत्पर्यन्तं इयं चित्तवृत्तिः विषयेषु गुप्तदोषाणामनुसन्धानं न करोति तावत्पर्यन्तं विषयेषु गन्तुं सामर्थ्यवती भवति । विषयाणां दोषदर्शनानन्तरमेव तेषु वैराग्यमुत्पद्यते । तेन शनैः शनैः क्रियमाणेन वैराग्येण विषयेषु चित्तवृत्तिप्रवाहः स्थगितः भवति । तदानीमेव विवेकदर्शनात्मकाभ्यासेन सा चित्तवृत्तिः विवेकमार्गानुगामिनी तिष्ठति । विवेकस्य दृढाभ्यासेन ध्येयाकारवृत्तेः प्रवाहः दृढः बलवान् च भवति इति विषयाणां निरोधे उपायः कथितः ।

## १४) अभ्यासलक्षणम् :-

अभ्यासस्य लक्षणमेवम्—"तत्र स्थितौ यत्नोऽभ्यासः (यो० सू० १-१३) इति । राजसतामसवृत्त्या रहितचित्तवृत्तेः प्रशान्तस्वरूपो यः परिणामविशेषः, तां स्थितिं साक्षात्कर्तुं वारं वारं क्रियमाणः उपायः अभ्यासो भवति । यावत् चित्तवृत्तौ राजसतामसवृत्तयः स्थास्यन्ति तावत् चित्तवृत्तेः प्रवाहः बहिर्मुखविषयेष्वेव भवति । यमनियमादि-बहिरङ्गसाधनानुष्ठानेन राजसतामसात्मिकाः वृत्तयः विलयं प्राप्नुवन्ति, सात्त्विकवृत्तेः उद्रेकोऽपि जायते । तदानीं स्वरूपनिष्ठचित्तस्य स्थितिः प्रशान्ता भवति । एतादृशस्य चित्तस्य प्रशान्तिसाधनाय निमित्तत्वेन वर्तमानः यः सः निरन्तरयत्नकरणात्मकः अभ्यासः । सूत्रे तत्र स्थितौ इति या सप्तमीविभक्तिः तस्याः अर्थः नाधिकरणं, किन्तु "चर्मणि द्वीपिनं हन्ति" इतिवत् निमित्तात् कर्मयोगे इति निमित्तार्थे सप्तमीपदप्रयोगः कृतः इति बोद्धव्यम् ।

## १५) वैराग्यलक्षणम् :-

अस्य निर्वचनाय पतञ्जलिः सूत्रं लिखति - "दृष्टानुश्रविक-विषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्" (यो० सू० १-१५) इति । संसारेऽस्मिन् भोगार्थत्वेन ये पदार्थाः सन्ति ते दृष्टविषयाः इत्युच्यन्ते । गुरुमुखेन श्रुतः वेदः अनुश्रवः, वेदेन प्रतिपादितं यत् पारलौकिकं

वशीकारसंज्ञा एव वैराग्यमित्युच्यते । एते सर्वे विषयाः मद्वशंगताः, अहमेतेषां वशे नास्मि इत्येवंप्रकारः विचारः एव वशीकारात्मकः भवति। एवमभ्यासवैराग्याभ्यां चित्तस्य निरोधः जायते इति विदितविचारः।

एवमस्मिन् योगशास्त्रे महर्षिणा पतञ्जलिना – क्रियायोगविचारः, अष्टाङ्गयोगविचारः, सिद्धिचतुष्टयं, प्रकृतेः कैवल्यमित्यादयः विषयाः प्रतिपादिताः। विस्तरभिया तेऽत्र न प्रस्तूयन्ते। यतः क्रियायोगादयः आसनाद्यनुष्ठानानां कृते अपेक्षिताः इति कृत्वा, एतावता योगशास्त्रज्ञानसम्पादनं भविष्यति इति विचिन्त्य उत्तरग्रन्थः न प्रस्तुतः।

## १६) पुरुषस्य कैवल्यम् :-

एकतायाः नाम कैवल्यमिति। प्रकृतेः कार्यभूतमहत्तत्वादीनां विलयेन, एवं पुरुषेण सह प्रकृतेः आत्यन्तिकवियोगेन एव प्रकृतेः एकाकित्वं सिद्धम्। पुरुषस्य कैवल्यमेतद् भवति यत् आत्मा स्वात्मनि वर्तमानानि समस्तोपाधिकस्वरूपाणि त्यक्त्वा स्वमूलस्वरूपे स्थायित्वेन वर्तमानत्वमिति। आत्मनः कैवल्यानन्तरमात्मा बुद्धितत्त्वेन सह न कदापि सम्बन्ध प्राप्नोति। भगवता पतञ्जलिना द्विःप्रकारात्मकं मुक्तिस्वरूपं प्रतिपादितं – "पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यम् स्वरूपप्रतिष्ठा वा चितिशक्तिः" (यो० सू० ४-३४) इति। अयं भावः- महत्तत्वादि सूक्ष्मभूतलिङ्गशरीराणां मध्ये सन्ति ये गुणाः ते पुरुषस्य उपभोगत्वेन कल्पिताः। एते गुणाः यदा कृतकार्यपराः भविष्यन्ति तदा पुरुषार्थशून्याः इत्युच्यन्ते। तदानीमेते गुणाः स्वकारणे लयं प्राप्नुवन्तीत्यतः प्रतिप्रसवसंज्ञावत्त्वं लभन्ते। बुद्धितत्त्वेन सह आत्मनः सम्बन्धस्य अवर्तमानत्वात् आत्मा असङ्गनिर्लेपादिस्वरूपेण अवस्थितः सन् तिष्ठति।इयमवस्था एव मोक्षावस्था इति गीयते। एतादृशाम् मोक्षावस्थां प्राप्य न कोऽपि जीवः पुनर्जन्म स्वीकरति। यतः कारणाभावात् कार्याभावः इति न्यायात् कारणभूतायाः प्रकृतेः लयेन कार्यभूतस्य महत्तत्वादीनामपि लयः सिद्धः एव।

योगशास्त्रे चत्वारः व्यूहाः सन्ति। यथा चिकित्साशास्त्रे— रोगः रोगहेतुः, आरोग्यम्, औषधम् इति भवन्ति तथा अत्र संसारः, संसारहेतुः, मोक्षः, मोक्षोपायः इति भविष्यन्ति। दुःखमयः संसारः हेयः। प्रधानपुरुषसंयोगः एव दुःखमयसंसारस्य हेतुः। प्रधानपुरुषसंयोगस्य आत्यन्तिकनिवृत्तिरेव मोक्षः। अस्योपायः सम्यग्दर्शनम्। प्रकृति-पुरुषयोः स्वाभाविकभेदस्य साक्षात्कारः एव सम्यग्दर्शनत्वेनात्र कथ्यते। एवं भवति आसनादीनामनुष्ठानयोग्यं संक्षिप्तं योगदर्शनम् इति।





***************************

# पञ्चमोऽध्यायः - मीमांसादर्शनम्

***************************

## ५-१) मीमांसाशास्त्रम् :-

मीमांसाशास्त्रस्य प्रवर्तकः महर्षिः जैमिनिः । अस्मिन् शास्त्रे धर्मानुष्ठानेनैव अभिमतफलसिद्धिर्भविष्यतीति मतम् । तदनुष्ठानं तु श्रुतिस्मृतिपुराणाद्यनेकधर्मग्रन्थेषु प्रसिद्धमस्ति । धर्मस्य लक्षणं किम्? धर्मे प्रमाणं किम् ? इत्यादिशङ्कानां समाधानं पूर्वमीमांसाशास्त्रादेव सिद्धं भवति । एतद् शास्त्रं द्वादशाध्यायेषु विभक्तं भवति भगवता जैमिनिना । प्रत्येकस्मिन् अध्याये तृभ्योऽधिकाः पादाः विलसन्ति ।

## २) मीमांसाशास्त्रपरिचयः :-

द्वादशाध्यायेषु प्रथमाध्यायस्य प्रथमे पादे प्रमाणविचारः कृतः । द्वितीये मन्त्राणामर्थवादविचारः प्रस्तुतः । तृतीये मन्वादिस्मृतीनामेवमाचारभूतविषयाणां प्रामाण्यविवेचनं कृतम् । चतुर्थे उद्भिद्-चित्रादिनामधेयानां प्रामाण्यविचारः सम्पादितः । द्वितीयाध्यायस्य प्रथमे पादे कर्मभेदचिन्तानामुपयुक्तः उपोद्घातः, द्वितीये धातुभेदाः एवं पुनरुक्त्यादिकर्मभेदानां वर्णनम्, तृतीये कर्मभेदप्रामाण्याऽपवादानां प्रस्तुतीकरणम्, चतुर्थे नित्यकाम्यकर्मणां प्रयोगे भेदनिरूपणमिति द्वितीयाध्याये विचारिताः । तृतीयाध्याये अष्टौ पादाः सन्ति । प्रथमपादे अङ्गत्वबोधकेषु षट् प्रमाणेषु श्रुतेः विचारः कृतः । द्वितीये लिङ्गविचारः, तृतीये वाक्यप्रकरणस्थानसमाख्यानां विचारः, चतुर्थे निवीतोपवीतत्वादिषु अर्थवादत्वविधित्वादीनां निर्णयहेतुभूतानां श्रुत्यादीनां विरोधपरिहारात्मको

विचारः, पञ्चमे प्रतिपत्तिकर्मविचारः, प्रतिपत्त्यर्थः भवति — उपयुक्तद्रव्यस्य विनियोगः इति । षष्ठे - अनारभ्याधीतविचारः, सप्तमे- बहुप्रधानोपकारकप्रयाजादिकर्मणां विचारः, अष्टमे पादे यजमानेन क्रियमाणस्य कर्मणः विचारः इति एते अष्टौ विचाराः तृतीयाध्याये विचारिताः दृश्यन्ते । चतुर्थाध्यायस्य प्रथमे पादे – प्रधानभूतस्य दध्यानयनस्य आमिक्षाप्रयोजनमित्यादि प्रधानस्य प्रयोक्तृत्वादिविचारः द्वितीये– अप्रधानभूतानि यानि, यथा–वत्सापाकरणम्, अनेन शाखाच्छेदे उपयोगः इत्यादि तेषां कर्मणां प्रयोक्तृत्वेन प्रदर्शनात्मकौ विचारः, तृतीये-'जुहू पर्णमयी' इत्यादि अपापश्लोकश्रवणादीनां कर्मणां भावाभाव- विचारः, चतुर्थे राजसूययागगतत्वेन अक्षद्यूतादिगौणाङ्गानां विचारः प्रस्तुतः । पञ्चमाध्यायस्य प्रथमे पादे - श्रुतेः क्रमः, श्रुत्यादिषु कर्मविचारस्यावश्यकत्वमपि संक्षेपेण प्रतिपादितम् । द्वितीते - क्रम- विशेषणां एवं अनेकेषु पशुषु एकैकधर्मसमापनमित्यादिविचाराः प्रस्तुताः । तृतीये – वृध्यवृद्धिविचारः साधितः । चतुर्थे – श्रुत्यादि- षट्प्रमाणानां पूर्वपूर्वप्राबल्यात्मको विचारः सम्पादितः । षष्ठाध्यायस्य कृते अष्टौ पादाः विलसन्ति । तत्र प्रथमे पादे – कर्मणः अधिकार- विषयिकी चर्चा प्रस्तुता । अर्थात् अन्धत्वादि इन्द्रियरहितानां पुरुषाणां यागादिषु नाधिकारः, किन्तु चक्षुष्मान् इत्यादि इन्द्रिययुक्तानां जनाना- मेव कर्मष्वधिकारः इति विस्तृतः विचारः कृतः । द्वितीये - अधिकारिणः कृते धर्मविचारः, तृतीये - मुख्यस्य प्रतिनिधिभूतस्यान्यस्य ग्रहणं कदा कुत्र स्वीकर्तव्यमित्यादयः विषयाः, चतुर्थे - कर्मणः अनुष्ठानविषये कस्य लोपः भवितुं शक्यते ? इति विचारः, पञ्चमे षष्ठे च – कालादि- वैगुण्ये सति प्रायश्चत्तविचारः, सप्तमे - अदेयविषयस्य प्रस्तावः, अष्टमे- लौकिकाग्नौ कदा इन्धनस्य सम्पादनं कर्तव्यम् इत्येते विषयाः उपन्यस्ताः । सप्तमाध्यायस्य प्रथमे - समानमित्यादि प्रत्यक्षवचनात् अतिदेशविचारः, द्वितीये - अतिदेशशेषवाक्यानां विवेचनम्, तृतीये - अग्निहोत्रनाम्ना अतिदेशस्य निर्णयः, चतुर्थे- लिङ्गादीनामतिदेशविचारः इति सप्तमाध्यायः प्रस्तुतः । अष्टमाध्यायस्य प्रथमे पादे - प्रत्यक्ष-

वचनानामभावेऽपि स्पष्टलिङ्गैः अतिदेशविचारः, तथा द्वितीये - अस्पष्ट-लिङ्गैः अतिदेशस्य विचारः, तृतीये - प्रबललिङ्गेभ्यः अतिदेशस्य विचारः एवं चतुर्थे अतिदेशवाक्यानामपवादस्य वर्णनं प्रस्तुतम्। नवमस्य प्रथमे- ऊहस्य विचारः, मन्त्रस्थितानां देवतालिङ्गसंख्यादिवाचकशब्दानां मध्ये तत्तद्देवतालिङ्गादिपरिवर्तनसम्पादनात्मकः ऊहः उच्यते। द्वितीये— साममन्त्रस्य ऊहविचारः, तृतीये – मन्त्रादीनामूहविचारः, चतुर्थे – मन्त्राणामूहप्रसङ्गकाले आगतानामन्येषां विषयाणां विचारः प्रस्तुतः। दशमाध्यायस्य प्रथमे पादे – बाधस्य हेतुभूताः ये लोपाः तेषां विधानं विहितम्। द्वारलोपस्तु अयं भवति यत् यत्र वेदिनिष्पादनार्थं द्वारत्वेन विहितमुत्खननमित्यादि कर्मणः अभावः तत्र उत्खननात्मकं कर्म बाधितं भवति, एवमेव यत्र धान्यवितुषीकरणात्मकं कर्म न सम्पाद्यते तत्र अवधातः, एवमन्यत्रापि द्रष्टव्यः। द्वितीये पादे - तस्यैव द्वारलोपस्य विचारः अनेकैः उदाहरणैः विस्तारेण कृतः। तृतीये तु – बाधस्य कार्यकारणत्वं प्रदर्शितम्। यथा - प्रकृतिभूतयागे ऋत्विजः परिग्रहत्वेन गवाऽश्वादीनां दक्षिणा कार्यत्वेन विहिता, विकृतिभूतयागे तु यागस्य दक्षिणारूपेण केवलं धेनुर्विहिता। अस्मिन् यागे प्रकृतिवत् प्राप्तायाः अश्वादिदक्षिणायाः कार्यरूपायाः तस्याः बाधः विहितः इत्यादि। चतुर्थे - यत्र बाधः कारणत्वेन न तिष्ठति तत्र समुच्चयानुष्ठानस्य विचारः, पञ्चमे – बाधस्य प्रसङ्गे ग्रहादीनां विचारः, षष्ठे - बाधप्रसङ्गे सामविषयाणां विचारः, सप्तमे - बाधप्रसङ्गे इतरसामान्यविषयाणां विचारः, एवमष्टमे – बाधस्य उपयुक्तानां नञर्थानां विचारःइत्यष्टौ विचाराः अत्र सम्यक् प्रतिपादिताः। एकादशाध्याये तन्त्रात्मको विचारः प्रस्तुतः। एककालानुष्ठानेन यस्य सिद्धिः तत्तन्त्रमित्युच्यते, अथवा अनेकैः उद्देश्यैः सम्पत्स्यमानस्य एकस्य कर्मणः एकवारानुष्ठाना-त्मकं तन्त्रमित्युच्यते। अध्यायस्यास्य प्रथमे पादे – तन्त्रस्योपोद्घातः, द्वितीये– तन्त्र-आवापयोः विचारः, तृतीये- तन्त्रस्य लक्षणात्मको विचारः चतुर्थे - विस्तृतः आवापविचारः इत्यध्यायः सम्पादितः। द्वादशाध्याये प्रसङ्ग-तन्त्री-निर्णय-समुच्चय-विकल्पानां विचारः प्रस्तुतः। प्रथमे पादे–

प्रसङ्गस्य विचारः, द्वितीये - तन्त्रिनिर्णययोः विचारः। साधारणधर्माः तन्त्रत्वेन कथ्यन्ते, यस्मिन् एते धर्माः सः तन्त्री भवति। तृतीये - समुच्चयविचारः, चतुर्थे - विकल्पस्य विचारः इति प्रस्तुतोऽयमध्यायः। द्वादशलक्षणात्मके अस्मिन् शास्त्रे तृतीय-षष्ठ-दशमाध्यायेषु (३-६-१०) अष्टौ पादाः सन्ति इत्ययं विशेषः दरीदृश्यते। एवं धर्मानुष्ठानविषये प्रमाणभूतस्य द्वादशलक्षणी इत्याख्यस्य मीमांसाशास्त्रस्य सामान्यः परिचयः। वेदोक्तधर्मानुष्ठानजिज्ञासवः मीमांसात्मकविषयविशेषान् अस्मात् ग्रन्थाद् धारयन्ति इति मे मतिः।

## ३) मीमांसाशास्त्रस्य प्रयोजनवत्त्वम् -

"चोदनालक्षणोऽर्थो धर्मः" ( मी० सू० १-१-२ ) इत्यस्मात् सूत्रात् "अन्वाहार्ये च दर्शनात्" (मी० सू० १२-४-४७) इत्यन्तं महर्षिणा जैमिनिना प्रणीतं मीमांसाशास्त्रं भवति। एतच्छास्त्रं आरम्भणीयमथवा अनारम्भणीयमित्यस्याः शङ्कायाः उत्थापकत्वेन एतद्वाक्यं भवति यत् "स्वाध्यायोऽध्येतव्यः" इति।

ननु अत्र विहितः अध्ययनविधिः दृष्टार्थः उत अदृष्टार्थः? यदि अध्ययनविधिः अदृष्टार्थत्वेन मन्यते तर्हि विचारशास्त्रस्यास्य आरम्भणे आवश्यकत्वं नास्ति, यतो हि वेदाध्ययने गुरुमुखानूच्चारणात्मकं कर्म अध्ययनमित्युच्यते। वेदमन्त्रोच्चारणेन न कोऽपि दृष्टार्थस्य सिद्धिः भविष्यति, एवं विधिशास्त्रं निरर्थकमित्यपि आपतेत्। तस्मात् विधिशास्त्रस्य स्वर्गादिसाधनवत्त्वं यददृष्टं तत् फलत्वेन उच्यते। एतददृष्ट अनुमानादिप्रमाणेन कल्प्यते। एवं स्वर्गरूपादृष्टफलं, केवलपाठमात्रेणैव सिद्धं चेत् मीमांसाशास्त्रारम्भणे नास्ति कश्चिदुपयोगः। यदि भवति अध्ययनविधेः दृष्टफलं, तदानीमर्थज्ञानसम्पादनाय विचारशास्त्रस्यास्य अवसरो अस्ति। यतः विचारं विना अर्थज्ञानं न सिध्यति। विधेः अनुकूलत्वेन विचारशास्त्रस्यास्य आवश्यकत्वात् शास्त्रमेतत् आरम्भणीयं भवति। यदि अध्ययनविधेः अर्थावबोधात्मकं दृष्टफलं न मुख्यं, स्वर्गादिरूपफलमेव तस्य मुख्यमित्युच्यते तर्हि पाठरूपा-

ध्ययनविधिना एव स्वर्गफलं सिध्यति । अनेनापि हेतुना विचारशास्त्रस्याऽनपेक्षितत्वात् एतन्मीमांसाशास्त्रं न आरम्भणीयमिति आगते पूर्वपक्षे सिद्धान्ती समाधत्ते ।

"स्वाध्यायोऽध्येतव्यः" इत्यत्र वर्तमानेन तव्यप्रत्ययेन अभिधाभावनायाः बोधो जायते । तव्यप्रत्ययेन विहितं विधानं विध्यर्थो भवति । विध्यर्थं एव भावना इति गीयते । भावना द्विविधा-अभिधाभावना आर्थीभावना चेति कथ्यते । अभिधीयते अर्थः अनेन इति व्युत्पत्त्या शब्दस्यैव अभिधा इति व्यवहारः । अभिधाभावना एव शाब्दीभावना अथवा प्रेरणा इत्युच्यते । उद्देश्यत्वेन यत्र पुरुषप्रवृत्तिः सा आर्थीभावना इति भण्यते । शाब्दीभावना इयं तव्यप्रत्ययस्य वाच्यभूता भवति, यतः "स्वाध्यायोऽध्येतव्यः"इति वाक्यश्रवणेन अध्ययने मम प्रवृत्तिः बोध्यते इति स्वयमेव प्रतीतिरुत्पद्यते । यस्य वाक्यस्य श्रवणं कथं विहितं, तदनु तद्वाक्यस्यार्थः नियमेन प्रतीयते इति रीतौ. अध्येतव्यः इति शब्दश्रवणेन तव्यस्य वाच्यभूता प्रवृत्तिः भवति इति सिद्धम् ।

अनया शाब्दीभावनया एव अध्ययने स्वर्गादिफलप्रयुक्तेषु यागादिषु पुरुषस्य प्रवृत्तिरुत्पद्यते । अस्याः प्रवृत्तेः नाम आर्थीभावना इति । यतः इयं पुरुषस्य अर्थरूपे प्रयोजने योजयति । इयमार्थीभावना तव्यप्रत्ययस्य वाचकरूपा भवति । उद्देश्यत्वेन यत्र पुरुषप्रवृत्तिः इति वाक्ये वर्तमानोद्देश्यपदेन सुखदुःखादयः नोच्यन्ते, किन्तु साध्यं यत् तदुच्यते । यत्र क्रियायाः फलमस्ति तदिति विवेकः । वेदः अनादिः नित्यः सिद्धश्च । अतः अयं वेदः साध्यः न भवति, अर्थात् उद्देश्यत्वेन नोच्यते । तथाच शाब्दी-आर्थीभावनयोरुभयोरपि वाच्यवाचकत्वेन तव्यप्रत्ययः एकः एव । शाब्दीभावनायाः आश्रयः तव्यप्रत्ययः पुरुषाश्रयः, आर्थीभावना इति विवेकः ।

यस्मिन् क्रियाफलं तिष्ठति तत् उद्देश्यत्वेन भण्यते । एतदुद्देश्यं चतुर्धा भिद्यते - उत्पत्तिः, प्राप्तिः, विकारः, संस्कारश्चेति । तत्र उत्पत्तिः - कुलालस्य क्रियानुसारं घटस्योत्पत्तिर्जायते । गमनक्रियया

देशान्तरस्य प्राप्तिः । पाकक्रियया तण्डुले अन्नात्मको विकारः। लाक्षारससेचनेन कर्पासबीजे गुणाधानद्वारा एकः संस्कारः उदेति। उद्देश्यत्वेन विहिताः इमे चत्वारः वेदे न सिध्यन्ति । यतः वेदस्य नित्यत्वाभ्युपगमात् अध्ययनप्रवृत्त्या तस्योत्पत्तिर्न भवति । स वेदः विभुः इति हेतोः तस्य प्राप्तिर्नास्ति । तेन कृताध्ययनेन तस्मिन् न कोऽपि विकारः जायते । अध्ययनेन वेदस्य संस्कारः नोत्पद्यते। तस्मात् एतत् सिद्धं यत् वेदाध्ययनयोः उक्तेषु चतुर्षु कोऽपि आर्थीभावनायाः उद्देश्यत्वेन भवितुं न शक्यते इति । उद्देश्यं विना भावनायाः व्यर्थत्वमापद्येत, तदर्थमुद्देश्यत्वेन अर्थावबोधः अवश्यं स्वीकर्तव्यो भवति। यद्येवं नाङ्गीक्रियते अध्ययनविधेः व्यर्थता स्यात् । अतः अध्ययनविधिसामर्थ्येन तस्य फलं अर्थज्ञानं भविष्यति । अध्ययनद्वारा अर्थज्ञानसम्पादनं कर्तव्यं इत्येव स्वाध्यायोऽध्येतव्यः इत्यत्र वर्तमानस्य अध्ययनविधेः तात्पर्यम् । अर्थज्ञानं तु केवलाध्ययनेन न सिध्यति। अर्थज्ञानसम्पादनाय शास्त्रस्य अपेक्षा अस्ति, एकस्मिन्नेव कर्मणि कर्तुमकर्तुमन्यथा वा कर्तुं पुरुषस्य सामर्थ्यवत्त्वात्, एतत्कर्म एवमेव सम्पादनीयमिति कर्मानुष्ठाने एकस्य नियमस्य अपेक्षा अस्ति । तादृशीमपेक्षात्मिकामाकांक्षां एतन्मीमांसाशास्त्रं पूरयति । अर्थनिर्धारणे शास्त्रस्यास्य महान् उपयोगः अस्ति । तस्मात् अवश्यमेव एतन्मीमांसाशास्त्रमारम्भणीयमिति।

यद्यप्यध्ययनविधेः विश्वजिन्न्यायानुग्रहेण स्वर्गफलं भवितुं शक्यते, तथापि तस्यार्थः स्वर्गफलं न भवति । यतः स्वर्गफलमदृष्टात्मकं भवति। सम्भवति दृष्टफलकत्वे अदृष्टफलकल्पनाया अन्याय्यत्वम् इति वाक्यानुसारं सति दृष्टफले कुतः अदृष्टफल कल्पनीयम् ? सूक्ष्मदृष्ट्या एतदत्र आलोचनीयम् - स्वाध्यायोऽध्येतव्य इत्यत्र अपूर्वनियमविध्योः अपूर्वविधिः न भवतीति कृत्वा नियमविधिः स्वीक्रियते। अयं नियमविधिः गुरुमुखात् अध्ययनं बोधयन् लिखितपाठेन अध्ययनं निवारयन् च दृष्टफलत्वेन तिष्ठति। अस्मात् नियमबलादेव अध्ययनं नियमविधेः दृष्टफल न भवति इति कारणेन अगत्या अवान्तरापूर्वरूपमदृष्टफलमस्य अध्ययनस्य कल्प्यते। तथा च वेदस्य सामान्याध्ययनेन

श्रोत्रियत्वसम्पादनात्मकं दृष्टं फलं, तस्यैव वेदस्य अर्थसम्पादनात्मकः मीमांसाशास्त्रस्य विषयाध्ययनेन अदृष्टात्मकं विशेषं फलं लभ्यते इत्यतः "स्वाध्यायोऽध्येतव्यः इति वाक्यं दृष्टादृष्टफलजनकत्वेन तिष्ठति इति दिक् ।

## ४) कुमारिलमतानुसारमधिकरणविवेचनम् -

पूर्वमीमांसायां "अथातो धर्मजिज्ञासा" (जै० सू० १-१-१) इति सूत्रेण प्रथमाधिकरणमारभ्यते। अवान्तरप्रकरणस्य नाम अधिकरणमिति। अधिकरणं पञ्चावयवात्मकं भवति । यथा—

विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरः ।
सङ्गतिश्चेति पञ्चाङ्गं प्राञ्चोऽधिकरणं विदुः ॥

इति । विशयः नाम संशयः । यमुद्दिश्य विचारः क्रियते सः विषयः। विषये यज्ज्ञानं प्रकारद्वयेन न स्पष्टीक्रियते सः भवति संशयः । प्रकारद्वये एकः भावरूपः, अन्यः अभावरूपः । कोटिद्वयेषु वादी यस्मिन् पक्षे स्वमतमुपस्थापयति सः पूर्वपक्षः । प्रतिवादिनः पूवपक्षखण्ड़नात्मकः सिद्धान्तः नाम उत्तरपक्षः । सङ्गतिः त्रिविधात्मिका भवति - अधिकरणसङ्गतिः, पादसङ्गतिः, अध्यायसङ्गतिश्चेति । सङ्गतेः स्वरूपमेवं भवति - अयं विचारोऽस्मिन्नधिकरण, अस्मिन् पादे, अस्मिन्नध्याये कर्तव्यत्वेन यद्विहितं तत्समुचितम् इति एवंप्रकारात्मकः विचार एव सङ्गतिरित्युच्यते ।

भाट्टास्तु- सङ्गतिमधिकरणाङ्गत्वेन मन्यन्ते । ते तु सङ्गतिस्थाने उत्तरमिति अङ्गत्वेन स्वीकरिष्यन्ति । निर्णयोत्तरयोः अयं भेदः यत् उत्तरं वादिमतस्य खण्डनमात्रं भवति, न तु सिद्धान्तः । यथा — जात्युत्तरं तद्वत् । निर्णयः एव सिद्धान्तो भवतीति । एतेषां मतानुसारमयं श्लोकः—

विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरः ।
निर्णयश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम् ॥



इति। एतेषां न्यायानुसारं – विषयः, संशयः, पूर्वपक्षः, उत्तरपक्षः, निर्णयः इति अधिकरणस्य पञ्चावयवाः।

एवं पञ्चावयवात्मकस्य अधिकरणस्य स्वाध्यायोऽध्येतव्यः इत्यादि श्रुतिपठितं वेदाध्ययनं विचाराङ्गत्वेन विषयः भवति इति आचार्यस्य कुमारिलस्याभिप्रायः। एतन्मतस्यैव भट्टमतमथवा आचार्यमतमिति लोके व्यवहारः।

## ५) गुरुमतपदौचित्यविचारः -

एवमेव "गुरुमतम्" इत्युक्ते प्रभाकरस्य। अत्र कारणमेतद् भवति– एकवारं प्रभाकरः गुरुणां सकाशे अधीयन्नास्त। समये च तस्मिन् एकस्यां फक्किकायां वर्तमानायां "तत्र तु नोक्तम, अत्रापि नोक्तमतः पौनरुक्तम्,' इत्यस्मिन् विषये गुरोः संशयः समजनि। तत्र तु इत्यस्य तात्पर्यमेतदस्ति - तस्मिन्नपि प्रकरणे वाक्यमेतद् नोक्तम्, प्रकरणे अस्मिन्नपि वाक्यमेतद् नोक्तम्, तस्मात् पुनः उक्तं भवति इति सति पौनरुक्तम् कथमिति प्रभाकरेण पृष्टे विषयेऽस्मिन् गुरुभिरपि विचारः कृतः। यदि एतद् न कुत्रापि भणितं पूर्वापरत्वेन तर्हि तस्य पुनरुक्तत्वं कथमागमिष्यति ? पुनरुक्तदोषस्तु अत्र जायते यत्र पूर्वमेकवारं प्रतिपाद्य तदैवान्यत्र प्रतिपाद्यत्वेन स्वीक्रियते इति तु दृष्टः। सत्येवमत्र का गतिः ? इति मनः कोटिद्वयमध्यवर्ति अभूत्। ते गुरवः स्थानान्तरं गत्वा चिन्तितुमारभन्त। एताच्छ्रुत्वा झटिति शिष्यः प्रभाकरः तस्मिन् वाक्ये एवं पदपरिच्छेदं कृतवान्। यथा - तत्र तुना - तुशब्देन उक्तम्, अत्र अपिना - अपिशब्देन उक्तम्, अतः पौनरुक्तमिति। एवं विकल्पितं वाक्यं दृष्ट्वा गुरोः सन्देहः निवारितः। तदा ते शिष्यानपृच्छन् - केन एवं पदव्यत्यासः कृतः ? इति। तदा प्रभाकरस्य नाम श्रुत्वा गुरुः परमसन्तोषमवाप्य - "त्वमेव गुरुः" इति तं व्यपदिदेश। तदानीमारभ्य सः प्रभाकरः गुरुरिति प्रथां प्राप। तस्य मतं भवति गुरुमतमिति। एवं मीमांसाशास्त्रे मतद्वयम् - एकमाचार्यमतम्, अन्यत् गुरुमतमिति। इदानीं प्रभाकरमतानुसारमधिकरणं विवेचयामः।

## ६) प्रभाकरमतानुसारमधिकरणविवेचनम् -

"अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत" इति श्रुत्यनुसारं विधेयविषयत्वेन अध्यापनं प्रतीयते इति प्रभाकरमतम्। अन्येषां मते तु श्रुतिः अध्यापनस्यैव विधानं भवति इत्यन्यदेतत्। विधेः एव नियोगः इति संज्ञा। यस्मिन् प्रति नियोगः अर्थात् विधानं करिष्यते सः नियोज्यः इत्युच्यते। अतः नियोगः नियोज्यस्यापेक्षां करोति। तर्हि निजोज्यपदार्थः कः? आचार्यत्वप्राप्त्यये यः भवति सः एव नियोज्यशब्दार्थः। अत्र कारणं तु उपनयीत इत्यत्र उपपूर्वक-नीधातोः विधिपूर्वकं स्वसमीपे शिष्यस्य नयनमेव अर्थत्वेन उच्यते। यतः उपनयीत इत्यात्मनेपदप्रयोगेण आचार्यस्य कर्मप्रतीतिरेव बोध्यते। आचार्यकर्मकरणे यः इच्छावान् सः नियोज्यः भवितुं शक्यते। उपनयने यः नियोज्यत्वेन नियुक्तो भवति सः एव अध्ययनेऽपि नियोज्यत्वेन तिष्ठति। अर्थात् उपनयनपूर्वकाध्ययनकरणे एव अध्यापके एकप्रकारस्य संस्कास्योत्पत्तिः भवति। स एव संस्कारः आचार्यशब्दस्य प्रवृत्तिनिमित्तो भवति। अनेन निमित्तेन सः आचार्य इति कथने योग्यः इति। "अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत" इति श्रुत्यर्थं प्रतिपादयन् नियोगः कः? नियोज्यः कः? इत्यादि विषयसम्वादनेन आचार्यः प्रभाकरः अधिकरणमारचयति।

## ७) श्रुत्यादीनां प्रामाण्यविचारः -

श्रुत्यादयः षट् वेदोक्तार्थनिर्णये प्रमाणानि भविष्यन्ति। तत्र सूत्रम् - "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" (जै० सू० ३-३-१४) इति। मन्त्रदेवताहविरादिद्रव्याणां विनियोगः कुत्र कर्तव्यः? इतीमामाकांक्षां निर्धारयन् श्रुत्यादिषट्प्रमाणानि प्रवर्तन्ते। इमानि षट् एकस्मिन् काले अथवा सर्वदा एकत्र प्रावर्तिष्यन्त तर्हि अनवस्था स्यात्। अतः पारदौर्बल्यमर्थविप्रकर्षात् इत्युक्तम्। यत्र प्रमाणद्वयस्य सन्निपातः तत्र पूर्वापेक्षया अपरं प्रमाणं दुर्बलमित्युच्यते। एतत् क्रमानुसारं सर्वेषां प्रमाणानां

निर्णायकत्वेन मुख्यत्वेन च श्रुतिरेव अन्तिमत्वेन तिष्टति । अस्याः अपेक्षया अन्ये लिङ्गादयः सर्वे दुर्दलाः भविष्यन्ति ।

श्रुतिः द्विःप्रकारात्मिका अस्ति – एका साक्षात् पठिता, अन्या अनुमिता । प्रथमस्योदाहरणम्— ऐन्द्रया गार्हपत्यमुपतिष्ठते इति । अत्र देवतासम्बन्धी या ऋक् तस्याः गार्हपत्याग्नि–उपस्थाने विनियोगः इति इयं श्रुतिः साक्षाद् वदति । द्वितीयस्योदाहरणम् - श्योनं त इति पुरोडाशस्य सदनं करोति इति । वाक्यमेतद् श्रुतिसमूहेषु न कुत्रापि मिलति । "श्योनं ते सदनं कृणोति" (तै० ब्रा० ३-६) इति ब्राह्मण-वाक्यानुसारं मन्त्रार्थं दृष्ट्वा अनेन लिङ्गात्मकज्ञापकबलेन मन्त्रार्था-नुसारं मन्त्रविनियोगं कुर्वन्त्याः श्रुतेरस्याः अनुमानं क्रियते ।

अर्थप्रकाशनसामर्थ्यात्मकं यत् तल्लिगमित्युच्यते । लिंगमेतत् श्रुत्यनुसारं भवति । लिंगमपि द्विविधम् - साक्षाद् दृश्यमानम्, अनुमितं चेति । साक्षाद् दृश्यमानं लिंगं नाम – श्योनं त इति पुरोडाशस्य सदनं करोति इति भवति । अनुमितलिंगस्योदाहरणम् – "देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां जुष्टं निर्वपामि" (ते० सं० १-१ ४) इति वाक्यम् । आकांक्षायोग्यतादिवशेन परम्परान्वितार्थ-पदानां यः समूहः तत् वाक्यमित्युच्यते । देवस्य त्वा इति वाक्ये अग्नये जुष्टं इति भागस्यास्य निर्वापरूपात्मकार्थप्रकाशनसामर्थ्यं प्रत्यक्षत्वेन दृष्टम् । तेन एकवाक्येन अवशिष्टभागस्य अनेन वाक्यप्रमाणबलेन अर्थप्रकाशनसामर्थ्यमनुमीयते । तेन समुदितलिंगेन देवस्य त्वेति निर्वपति इति श्रुतेः अनुमानं क्रियते इति श्रुतेरपेक्षया लिंगं दुर्बलम् ।

लिंगस्यानुमापकं वाक्यमपि द्विविधम् - साक्षादनुमितभेदेन । वाक्यस्य साक्षादुदाहरणं देवस्य त्वा इति । अन्यस्योदाहरणम् – "समिधो यजति" इत्यस्यां श्रुतौ इष्टविशेषनिर्देशाभावात् यागेनानेन कस्याः भावना करणीया इत्याकांक्षायाम्, एवमेव 'दर्शपूर्णमासाभ्यां स्वर्गं भावयेत्" इत्यस्मिन्नपि वाक्ये कथं भावयेत् इत्याकांक्षायाम् इमे द्वि

आकांक्षे यत्र प्रतिपादिते स्तः तत्प्रकरणम् भवतीति हेतोः तदेवात्र वाक्यद्वययोः प्रमाणं भवति । प्रकरणमेतद् द्वयोस्तयोः एकवाक्यतां सम्पादयति । अर्थात् प्रकरणेन अनुमीयते तयोः एकवाक्यतात्मकः अर्थावबोधः, इति कृत्वा "समिधो यजति" इति वाक्यं लिङ्गापेक्षया दुर्बलम् ।

उभयाकांक्षा यत्र तत्प्रकरणमित्युच्यते । एतदपि द्विविधम्-साक्षात् श्रुतम्,अपरमनुमितं चेति । प्रथमस्योदाहरणं पूर्वमेव प्रतिपादितम् द्वितीयस्य – 'ऐन्द्राग्नमेकादशकपालं निर्वपेत्" (तै० सं० २-२-११) इत्यादिना इष्टिविधानं क्रियते । "इन्द्राग्नी रोचना दिवः" (तै० सं० ४-२-११) इत्यादि मन्त्रानुसारं यथासंख्यपाठानुरोधेन यथाक्रमं विनियोगोऽपि उक्तः । एवं तत्तद्वाक्यं तत्तत् स्थानविशेषेण एकवाक्यत्वं भजते इत्यतः स्थानानुमानेन प्रकरणार्थः निश्चीयते । एवं प्रकरणार्थः वाक्ये, वाक्यं लिङ्गे, लिङ्गं श्रुतौ इति परम्परया प्रकरणार्थस्य विनियोगात् वाक्यापेक्षया प्रकरणं दुर्बलं भवति ।

उभयाकांक्षायाः अनुमापकं स्थानप्रमाणमपि द्विविधम् - साक्षादेकम्, अन्यत् समाख्यया अनुमितं चेति । समाख्या नाम-योगबलम् अर्थात् अन्वर्थता इत्युच्यते । स्थानस्य साक्षादुदाहरणं प्रकरणे प्रतिपादितम् । अन्यानुमितस्योदाहरणम् – हौत्रम्, औद्गात्रम् इत्यादि । होतुरिदं हौत्रम् इति योगवचेन हौत्रादिसमाख्यया यल्लब्धं कर्म तत् होतुः पुरुषस्य अनुष्ठानयोग्यमिति अनुमीयते । समाख्या सम्बन्धप्रयुक्ता एव भवति । असन्निहितपुरुषेण सह सम्बन्धाभावात्, सम्बन्धस्य सिध्यर्थं सन्निधिपाठरूपक्रमस्य कल्पना क्रियते । अनुमानेन पाठक्रमे सिद्धे सति तेन उभयाकांक्षायाः अनुमानं क्रियते । तेनानुमानेन एकवाक्यतायाः सिद्धिः इति हेतोः षट् प्रमाणेषु अन्तिमत्वेन दुर्बला भवति इयं समाख्या ।

तस्मात् समाख्या स्थाने अन्तर्भवति, स्थानं प्रकरणे अन्तर्भवति, प्रकरणं वाक्येऽन्तर्भावं भजते, वाक्यं लिङ्गे स्वात्मानमर्पयति, लिङ्गं

स्वस्वरूपं श्रुत्या स्वीकरोति इत्यतः जैमिनिना उक्तम् - "श्रुतिलिङ्ग-वाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" इति। श्रुतिः वेदरूपः इत्युच्यते।

## २) प्रामाण्यवादविचारः -

प्रमाणानां यः भावः अर्थात् धर्मविशेषः अस्ति तदेव प्रामाण्य-मित्युच्यते। यथार्थानुभवः प्रमाणमित्युच्यते। एतद् प्रमाणं प्रमा इत्यपि कथ्यते। यथार्थानुभवे वर्तमानः यः वियेषधर्मः तस्य प्रामाण्यमिति कथनात् एतत् प्रमात्वं, प्रमाणत्वमित्यादि शब्दैः व्यपदिश्यते। भावा-भावभेदेन विरुद्धत्वेन अप्रमात्वमप्रमाणत्वमित्यपि कथ्यते। प्रामाण्य-कारणत्वेन यः वादः अस्ति तस्य "प्रामाण्यवादः" इति नाम। अयं वादः द्वेधा व्यवह्रियते - जननकारणविषयकः, ज्ञापककारणविषयकश्चेति। यस्मिन् कार्यस्योत्पत्तिः भवति सः वादः जननकारणविषयकः। ज्ञापक-कारणविषयस्तु यस्मिन् कार्यज्ञानं सम्पाद्यते सः इति। प्रामाण्यस्य कारणं भवति - स्वतः परतश्चेति। यत्र स्वतः परतश्चेति संशयः तत्र वादारम्भो भवति। स्थिते एवं के स्वतःप्रामस्ण्यं स्वीकुर्वन्ति, के परतः प्रामाण्य-मभ्युपगच्छन्ति इति ज्ञापनाय भवत्ययं श्लोकसन्दर्भः—

प्रमाणत्वाप्रमाणत्वे स्वस्तः सांख्याः समाश्रिताः।
नैयायिकास्ते परतः सौगताश्चरमं स्वतः॥
प्रथमं परतः प्राहुः प्रामाण्यं वेदवादिनः।
प्रमाणत्वं स्वतः प्राहुः परतश्चाप्रमाणताम्॥

इति। सांख्याः प्रमाणत्वाप्रमाणत्वयोः जन्म स्वतः इति, नैयायिकाः परतः इति, बौद्धास्तु अप्रामाण्यस्य जन्म स्वतः प्रामाण्यस्य परतः इति। वेदवादिनः मीमांसकास्तु प्रामाण्यं स्वतः अप्रामाण्यं परतः इति स्वस्व-मतमुपस्थापयन्ति। एतेषां विस्तारः खण्डनमण्डनात्मको विचारः ग्रन्थान्तरादवलोकनीयः।

स्वतःप्रामाण्यं युक्तियुक्तं भवति। यतः प्रामाण्यस्य स्वतः सिद्धत्वं एतद् भवति यत् विज्ञानसामग्रीजन्यं एवं तद्भिन्नहेत्वजन्यमिति।

अयं भावः- येन सामग्रीवशेन विज्ञानमुत्पद्यते, तेनैव वर्तमानं प्रामण्यमपि उत्पन्नं भवति। प्रामाण्योत्पत्तौ गुणमथवा दोषाभावं विहाय अन्यः हेतुः न कोऽपि तिष्ठति। दोषास्तु प्रमायाः प्रतिबन्धकमात्रत्वेनोच्यन्ते। अयं मीमांसकाभिमतः प्रामाण्यबादविचारः।

स्वतःप्रामाण्ये मीमांसामतानुसारमनुमाने-विवादास्पदं प्रामाण्यं पक्षत्वेन स्वीक्रियते, विज्ञानसामग्रीजन्यं तद्भिन्नहेतुना यदजन्यं तत् साध्यत्वेन स्वीक्रियते, अप्रमायाः अनाश्रयत्वं हेतुत्वेन तिष्ठति, घटादि-प्रमासदृशः दृष्टान्तः भवति इति विवेचनीयम्। एवं विध्यर्थवादमन्त्र-नामधेयात्मकैः चतुर्भिः भागैः विभक्तः वेदः धर्मविषये स्वतःप्रामाण्यं भवति। अज्ञातार्थज्ञापकः यः वेदमन्त्रः सः विधिर्भवति। यथा- "अग्निहोत्रं जुहुयात्स्वर्गकामः" इति। प्रशंसा अथवा निन्दापरकस्य वेदवाक्यस्य अर्थवादः इति संज्ञा। यथा – "वायुर्वै क्षेपिष्ठा देवता" इति वायोः स्तुतिद्वारा "वायव्यं श्वेतपालभेत" इति विधेः प्रशंसां करोति। एवमेव "सोऽरोदीत्तद्रुद्रस्य रुद्रत्वम्" अनेन वाक्येन रजतस्य निन्दाबोधनं जायते। प्रयोग समवेतार्थस्मारकत्वेन यद् वेदवाक्यं सः मन्त्रः भवति। यथा- स्योनं ते सदनं कृणोमि इति। अस्य मन्त्रस्य उपयोगः पुरोडाशस्य सुखकराशयद्वारा यज्ञादिकर्मणि भवति। अर्थस्मरणं मन्त्रेणैव कार्यम् इति हेतोः मन्त्रस्यापि आम्नायत्वमुक्तम्। नामानिर्देशपूर्वकं यागस्य विधानं यत् तन्नामधेयत्वेन कथ्यते। यथा – "श्येनेनाभिचरन् यजेत, उद्भिदा यजेत पशुकामः" इत्यादयः। एते चत्वारः क्रियापरकाः इति हेतोः एतेषां चतुर्णामपि आम्नायत्वं सिद्धम्।

मीमांसकाः वेदवादिनः इति हेतोः जैमिनिनोक्तम्- आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" (जै० सू० १-२-१) इति। वेदस्य स्वतःप्रामाण्यमेतैः आचार्यैरेव साधितम् इत्यतः वेदार्थमीमांसारूपमेतद् मीमांसादर्शनं भवति।

## ६) वेतस्यापौरुषेयत्वविचारः -

इमे ग्रन्थात्मकाः वेदाः अग्न्यादिप्राणविधवेदाः इव अपौरुषेयाः

भवन्तीति मीमांसकाः। तत्र पौरुषेयत्वं नाम प्रमाणान्तरेण अर्थमुपलभ्य रचितत्वम् तत् वेदे नास्ति। अतः अयं वेदः अपौरुषेयः इति। अनेनैव कारणेन वेदस्य स्वतःप्रामाण्यमपि सिध्यति। पुरुषसम्बन्धसम्भाविताः भ्रम-प्रमाद-विप्रलिप्सादयः अप्रामाण्यहेतवः ये ते वेदे न मिलिष्यन्ति। वेदस्य ब्रह्मस्वरूपत्वात् तस्मिन् वेदे प्रतिपादितः वेदनारायण एव पुरुषः जीवः इति च वक्ष्यमाणत्वात् वेदस्यापौरुषेयत्वं सिद्धमिति एतेषां सिद्धान्तः।

"ईश्वरकृताः वेदाः" इति वैशेषिकाः नैयायिकाः वेदान्तिनश्च भणन्ति। तत्र कारणम्- कण्ठताल्वाद्यभिघातजन्य-वर्णरूपाणां वेदानामपौरुषेयत्वासम्भवात् इति। ब्रह्मणः श्वासोच्छ्वासरूपेण वेदानामुत्पत्तिः इति श्रूयते। आप्तोक्तत्वे यथा प्रामाण्यं तथा तेषां वेदानां प्रामाण्यमुत्पद्यते। भवति ऋङ्मन्त्रः–

तस्माद्यज्ञात्सर्वहुतः ऋचः सामानि जज्ञिरे।
छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥ (ऋ०सं० १०-९० ९)

इति। एवमुपनिषदि—

यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै।

(श्वे० उ० ६-१८) इति च। भवति न्यायसूत्रमपि – मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात् (न्या० सू० २-१-६९) इति। एवमादिभ्यः मन्त्रोपनिषद्वाक्येभ्यः ईश्वरकृतत्वम् ईश्वरप्रोक्तत्वं वा वेदस्य स्पष्टमिति एतेषामाशयः।

अत्रेदमवधार्यम्। वेदः पौरुषेयो वा अपौरुषेयो वा इति विशिष्य न चिन्तनीयम्। यतः कीदृशाः अपि ते ज्ञान-विज्ञानराशयः सन्ति। गुणैकपक्षपातिभिः विद्वद्भिः तेषामर्थानुसन्धानपूर्वकमध्ययनमवश्यं कर्तव्यमेव। तैरेव वेदैः पुनरपि वयं पुरा इव जगतः गुरुत्वं प्राप्तुं ज्ञातुं च शक्नुमः इदानीमित्यविस्मरणीयम्।

ईश्वरस्य निःश्वासरूपेण स्थिताः वेदाः पौरुषेयाः इति सत्यपि



लौकिक पुरुषनिर्मितत्वाभावमात्रेण अपौरुषेयाः भवन्ति। यतः ब्रह्मणः लौकिकपुरुशवत् जननमरणधर्मौ न स्तः। ईश्वरः अनादिः इत्युक्तत्वात् वेदोऽपि अनादिरिति स्वयमेव सिद्धम्। अत एव वेदाः निर्दोषाः प्रामाणिकाश्च इत्यतः मीमांसाशास्त्रे वेदस्यापौरुषेयत्वं सिद्धम्।

## १०) वेदस्य स्रष्टा ब्रह्म :-

ईश्वर एव सम्पूर्णस्य जगतः सृष्टेः कारणरूपो भवति। तेनैव निर्मितं भवति इदं जगत्। यथा – लोके कुलालः घटस्य निर्माता भवति, घटनिर्माणात् पूर्वं तद्विषयकचिन्तां मनसि कृत्वा तज्ज्ञानं बुद्धौ सम्यगवधार्थ अनन्तरं घटं निर्मास्यति एवं परमात्मा प्राणिनां धर्माधर्मपुरस्सरं वेदोक्तरीत्या सृष्टिं करोति। यद्यपि वेदस्यापौरुषेयत्वमेव सिध्यति तथापि साक्षाद्वेदेनैव सृष्ट्यादयः न जायन्ते। अतः वेदस्य स्वतः अपौरुषेयत्वं, ब्रह्मणा श्वासोच्छ्वासमुखेन प्रणीतत्वात् पौरुषेयत्वं च सिध्यतः। वेदस्य पौरुषेयत्वमपि ब्रह्मणः नित्यत्वात् अपौरुषेयत्वमेव भजते जन्मनाशरहितत्वात्। सर्वप्राणिनां धर्माधर्माः बुध्यादयश्च परमात्मनि वर्तन्ते। अयमीश्वरः तेषां धर्माधर्मानुसारेण चराचरप्राणिनां सृष्टिं करोति। तेषां भरणार्थं वेदानां निर्माणं करोति। यथा लोके पिता पुत्रमुत्पादयति, अनन्तरं तस्य हिताय ज्ञानं बोधयति, तेन ज्ञानेन अहितानां कर्मणां परिहारं कर्तुं तस्य शिक्षां ददाति तथा परमेश्वरः जीवानामिष्टप्राप्तेः अनिष्टपरिहारार्थं च वेदानां सृष्टिं करोति। किं च जीवानां सुकृत-दुष्कृतकर्मणां फलमीश्वरः ददाति। पूर्वमीमांसायां तु कर्म स्वतः अपूर्वोत्पादनद्वारा स्वस्य फलं ददाति इत्यभ्युपगम्यते। ईश्वरः इत्येको वर्तते वा न वा इत्यत्र एतेषां मीमांसा नास्ति। वेदान्तदर्शने परब्रह्म इत्येकम् अनन्तमनादि अस्तीत्यभ्युपगम्यते, तद् वेदस्य निर्मातृ भवति इति च पूर्वोत्तरमीमांसयोर्भेदः।

किंच मीमांसानये वेदः अपौरुषयः, तेनैव सृष्ट्यादि कर्मजातं चाल्यते इत्युच्यते। कर्मण मुख्यत्वं प्राबल्यत्वं च दातुं मतमेतदङ्गी-

क्रियते । यदा बौद्धानां चार्वाकाणां च मतस्य बाहुल्यमासीत् तदा तत्तन्मतं खण्डयितुं, एवं वेदोक्तकर्मानुष्ठाने जनानुरागमाकलयितुं आचार्याः कुमारिलभट्टापादाः कर्मणः एवं मुख्यत्वं ददुः। शारीरक-मीमांसकास्तु ब्रह्मणः जगत्सृष्टिं, तस्य जगतः सृष्ट्यर्थं, सृष्टिगतानां जीवानां च वेदस्योपयोगः । वेदस्तु यथावत् ब्रह्मणा निर्मितः - धाता यथा पूर्वमकल्पयत्" (ऋ०सं० १०-१९०-३) इत्यादि श्रुतेः इति वदन्ति। अतः ईश्वरापेक्षया वेदः पौरुषेयः, जीवापेक्षया वेदः अपौरुषेय एवेति अभ्युपगम्यते । यदि जीवापेक्षया वेदः पौरुषेयो भवति तर्हि जीवगतधर्माः ये भ्रमप्रमादादयः एते वेदेऽपि अवश्यं सम्भवेयुः। वेदे तु न तथा दृश्यते । तस्मात् वेदस्य सृष्टा ब्रह्म इति सिध्यति ।

## ११) वेदस्य नित्यत्वविचारः -

भगवता परमर्षिणा जैमिनिना अभिप्रेतं यत् अर्थेन सह शब्दस्य सम्बन्धो भवति, अयं सम्बन्धः औत्पत्तिकरूपेण नित्यो भवति, न तु कृत्रिमः साङ्केतिको वा । तस्य नित्यत्वं स्वाभाविकमित्युच्यते । अतः एव विधिवाक्योत्पन्नं ज्ञानमबाधितं सत् सत्यं भवति । वेदशब्दाः अज्ञातविषयाणां ज्ञानं जनयन्ति, अतः ते स्थायिनः भवन्ति । उच्चारणात् पूर्वं शब्दः अव्यक्तावस्थायां तिष्ठति, उच्चारणेन ते एव अव्यक्तभूताः शब्दाः व्यक्ताः भविष्यन्ति । अतः शब्दो नित्यः। उत्पन्ने शब्दे करण-रूपक्रिया न सम्भवति । उच्चारणानन्तरमपि शब्दः तथैव तिष्ठति किन्तु अव्यक्तावस्थायाम्, तदा तस्य नाशः न हि भवति। तस्मात् वेदो नित्यः इति, वेदशब्दानां नित्यत्वात् शब्दैः प्रतिपाद्यमाना देवता अपि नित्या एव भवति । एतेन देवतानामपि नित्यत्वं स्थापितं भवति।

## १२) देवतानामेकत्वविचारः -

ऋग्वेदे प्रतिपादिताः अनेके देवतात्मानः एकस्यैव परमात्मनः स्वरूपभूताः भवन्ति ।

एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः।

(ऋ० सं० १-२२-१६) इति श्रुतेः । ऋग्वेदे वर्गत्रयात्मकाः देवताः

भवन्ति। तेषां वर्गाणां नाम - पृथिवी, अन्तरिक्षं, द्यौः इति। एतेषु पृथिव्याः देवता-अग्निः, अन्तरिक्षस्य देवता - इन्द्रः अथवा वायुः, द्युलोकस्य देवता - सूर्यः इति। एतेषां त्रयाणां मध्ये सम्बन्धस्य वर्तमानत्वात् पृथिवी-अन्तरिक्षं द्यौः एते त्रयः एकीभूताः भवन्ति। यद्यपि एताः देवताः स्वस्वकर्मानुसारेण त्रिषु नामसु प्रसिद्धाः अथापिः वस्तुतः एते त्रयः एकस्मिन्नेव परमात्मनि अन्तर्भवन्ति। तथा च वाक्यम् - "तासां महाभाग्यात् एकैकस्यापि बहूनि नामधेयानि भवन्ति" इति। यास्कोऽपि निरुक्ते लिखति - "नरराष्ट्रमिव" इति। यथा एकस्यैव राज्ञः कृते सर्वं राष्ट्रं भवति तद्वत् एकस्य परमात्मनः कृते सर्वं भवति। सर्वं परमात्मस्वरूपमित्यर्थः। चोक्तमुपनिषदि—

"एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा" (श्वे० उ० ६-११) इति। निरुक्तेऽपि - एकस्यात्मनोऽन्ये देवाः प्रत्यङ्गानि भवन्ति इत्याम्नातं भवति। तस्मात् सर्वे देवाः एकस्यैव परमात्मनः स्वरूपभूताः भवन्ति। तस्य आत्मनः ज्ञानायैव सर्वाः वेदान्तोपनिषच्छ्रुतयः वेदश्च प्रभवन्ति इत्यतः एकविज्ञानेन सर्वविज्ञानं सिध्यतीति एतदेव मोक्षतत्त्वमित्युच्यते॥



# षष्ठोऽध्यायः - वेदान्तदर्शनम्

## ६-१) वेदान्तशास्त्रम् :-

प्रपञ्चे जीवभावङ्गतस्य विवेकिनः प्रत्येकपुरुषस्य धर्मार्थकाम-मोक्षाख्याः चत्वारः पुरुषार्थाः सन्ति । चतुर्षु एतेषु आद्यास्त्रयः पाञ्चभौतिकेऽस्मिन् प्रपञ्चे भौतिकस्य जीवस्य कृते इहफलभोगत्वेन विहिताः भवन्ति । अन्तिमः मोक्षः परमसुखात्मकः इति कथनात् अयं परमपुरुषार्थः भवति । चतुर्णामेतेषां चतुर्वर्गत्वेन व्यवहारः । वर्गचतुष्टयानां मध्ये अद्यास्त्रयः तत्तत्पुरुषमत्यनुसारमुत्पन्नत्वात् एतेषामनित्यत्वमुच्यते । अन्तिमत्वेन निर्विशेषात्मकं सुखं प्राप्यते इत्यतः मोक्षः नित्यः इति शास्त्रेषु गीयते । नित्यभूतस्यास्य मोक्षस्वरूपस्य प्राप्त्यर्थं विभिन्नाः दर्शनकाराः भिन्नभिन्नप्रकारेण स्वमतं व्याचख्युः । वेदान्तशास्त्रे केवलमात्मस्वरूपं प्रतिपाद्यते इति हेतोः मुमुक्षुः वेदान्तशास्त्रपठन-श्रवणमननादिषु प्रवृत्तो भवति । तस्मात् एतत् शास्त्रं सर्वेणां शास्त्राणां शिरोमणिभूतं भवति । अस्मिन्नपि शास्त्रे अत्मनः स्वरूपप्रतिपादनं महता विस्तरेण प्रतिपादितमस्ति ।

यत्र समस्तवेदमन्त्राणां लक्ष्यत्वेन अन्तिमं तत्त्वमेकं वर्णितं भवति तत् वेदान्तशास्त्रमित्युच्यते । उपनिषन्मन्त्रसमूहस्यापि वेदान्तः इति संज्ञा, यतः समस्तवेदानां परमलक्ष्यात्मकं तत्त्वमुपनिषन्मन्त्रेषु निगदितमस्ति । परिदृश्यमानस्य चराचरात्मकस्य सकलप्रपञ्चस्य सृष्टिकर्तृत्वेन मूलकारणं यद् ब्रह्म, तस्य सम्पूर्णं विवेचनात्मकं ज्ञानमुपनिषत्स्वेव लभ्यते, एवमन्यत्र न मिलिष्यति । अतः वेदानामन्तिमं

रहस्यमुपनिषदि कथितत्वात् उपनिषत् वेदान्तत्वेन आद्रियते । उक्तं च- "वेदान्तो नाम उपनिषत्प्रमाणम्" इति । परन्तु उपनिषत्सु अत्यन्त-रहस्यत्वेन गूढ़तमभावाः सन्तीति कृत्वा उपनिषदर्थः सर्वैः ज्ञातुं न शक्यते । सर्वेषां सम्यगवबोधनाय परमकारुणिकः वेदव्यासः उपनिषत्सारभूतानामर्थानामेकीकृत्य सूत्ररूपेण प्रणिनाय । यानि इदानीं गीयन्ते ब्रह्मसूत्राणि अथवा वेदान्तसूत्राणि इति । ब्रह्मसूत्रात्मकः भागः अत्यल्पः, अथापि महत्वपूर्णः इति कृत्वा एतेषां सूत्राणां व्याख्याने आहत्य एकादशजनाः स्वजन्म समर्पितवन्तः । एतैः एकादशव्याख्याकारैः प्रणीतः वेदान्तग्रन्थः तत्तन्मतानुसारं महान् अस्ति । अतः अस्मिन् लेखे सर्वेषां समाहारो न भवति इति कृत्वा एकादशव्याख्याकारेषु अन्यतमानां केवलाद्वैतसिद्धान्तकर्तृणां श्रीमदाचार्याणां गुरुणां शङ्कराणां वेदान्तशास्त्रं अत्र प्रतिपादनाय स्वीक्रियते ।

## २) वेदान्तशास्त्रपरिचयः -

श्रीशङ्कराचार्यैः प्रणीतस्य ग्रन्थस्य नाम "ब्रह्मसूत्रशाङ्करभाष्यम्" इति भवति । अस्मिन् भाष्ये चत्वारः अध्यायाः सन्ति । तेषां नामानि- समन्वयाध्यायः, अविरोधाध्यायः, साधनाध्यायः, फलाध्यायश्चेति । तत्र प्रथमे – सर्वेषां वेदान्तश्रुतीनां ब्रह्मण्येव समन्वयः इति, द्वितीये - सांख्यादीनां विरोधतर्काणां निराकरणेन अस्माकं मतस्य अविरोध इति समर्थनमिति, तृतीये - ब्रह्मविद्या कथं साधयितुं शक्यते, तस्याः साधनं किमिति, चतुर्थे – साधनानन्तरं ब्रह्मविद्यायाः किं फलं भविष्यति इति ब्रह्मविद्यायाः फलमिति तत्तदध्यायसङ्गतिरूपेण तस्य तस्याध्यायस्य अन्वर्थनाम दत्तम् । एवमध्यायचतुष्टयेषु शङ्कराचार्याः भगवता बादरायणेन प्रणीतस्य वेदान्तशास्त्रस्य "प्रत्यग्ब्रह्मैक्यं विषयः" इति प्रत्यपीपदन् ।

प्रत्येकस्मिन् अध्याये चत्वारः पादाः सन्ति । तत्र प्रथमाध्यायस्य प्रथमे पादे - स्पष्टब्रह्मलिङ्गं वाक्यजातं मीमांस्यते । द्वितीये पादे - अस्पष्टब्रह्मलिङ्गमुपास्यविषयम् । तृतीये पादे - तादृशं ज्ञेयविषयम् ।

चतुर्थे तु – अव्यक्तानामजादिपदानां सन्दिग्धं पदजातमिति । अविरोधाध्यायस्य प्रथमे - सांख्य-योग-कणादादिस्मृतिविरोधपरिहारः । द्वितीये सांख्यादिमतानां दुष्टत्वनिरूपणम् । तृतीये - पञ्चमहाभूतश्रुतीनां जीवश्रुतीनां च परस्परविरोधपरिहारात्मकः विचारः । चतुर्थे - लिङ्गशरीरश्रुतीनां विरोधपरिहारः इति द्वितीयोऽध्यायः । तृतीयाध्यायस्य प्रथमे पादे जीवस्य परलोकगमनागमनविचारपुरस्सरं वैराग्यसम्पादनम्, द्वितीये - त्वंपद-तत्पदार्थपरिशोधनम् । तृतीये पादे - सगुणविद्यासु गुणोपसंहारविचारः, चतुर्थे – निर्गुणब्रह्मविद्यायाः बहिरङ्गान्तरङ्गाश्रम-यज्ञशमादिसाधनजातम् इत्येते विचाराः प्रस्तुताः । चतुर्थस्य प्रथमे – ब्रह्मसाक्षात्कारेण जीवस्य पापपुण्यक्लेशवैधुर्यलक्षणा मुक्तिविचारः, द्वितीये - मरणोत्क्रमणप्रकारः, तृतीये - सगुणब्रह्मोपासकस्य उत्तरमार्ग-विधानम्, चतुर्थे – निर्गुण-सगुण–ब्रह्मविदः विदेहकैवल्यब्रह्मलोकावस्थानानि इत्यादिविचाराः प्रतिपादिताः । इत्थं ब्रह्मविचारशास्त्राध्याय-पदार्थसंग्रहः ।

अत्र सूत्रभाष्यस्य प्रथमाध्याये – एकोनचत्वारिंशदधिकरणानि, एवं एकशतोत्तरचतुस्त्रिंशत् संख्याकानि सूत्राणि भवन्ति । द्वितीयाध्याये सप्तचत्वारिंशदधिकरणानि, सप्तपञ्चाशदधिकैकशतसूत्राणि सन्ति । तृतीयाध्याये – एकषष्ठ्यधिकरणानि, एवमेव एकशतोत्तरषडशीति-सूत्राणि वर्तन्ते । चतुर्थाध्याये- अष्टत्रिंशदधिकरणानि,अष्टसप्ततिसंख्याकानि सूत्राणीति परिगण्यन्ते । अधिकरणानां विशेषज्ञानाय प्रस्तूयते -

सूत्रभाष्यस्य प्रथमाध्यायस्य प्रथमे पादे एकादश अधिकरणानि सन्ति - जिज्ञासा-जन्म–शास्त्रयोनित्व-समन्वय–ईक्षत्-आनन्दमय-अन्तस्तद्धर्म-आकाश प्राण-ज्योतिश्चरण-इन्द्रप्रतर्दनादीनि । पादेऽस्मिन् भवन्ति ३१ सूत्राणि । द्वितीयेपादे - सर्वत्रप्रसिद्ध-अत्तृ-गुहाम्प्रविष्ट-अन्तर-अन्तर्यामि-अदृश्यत्व-वैश्वानरादि सप्त अधिकरणानि, एवमत्र ३२ सूत्राणि च भविष्यन्ति । तृतीयपादे- द्युभु-भूमा-अक्षर-ईक्षतिकर्मव्यपदेश-दहर-अनुकृति-प्रमित-देवता-अपशूद्र-कम्पन-ज्योति-अर्थान्तरत्व-व्यपदेश-

सुषुप्त्युत्क्रान्तिरिति त्रयोदश अधिकरणानि, एवं ४३ सूत्राणि प्रतिपादितानि। चतुर्थपादे- आनुमानिक-चमस-संख्योपसंग्रह-कारणत्व-बालाकि-वाक्यान्वय-प्रकृति-सर्वव्याख्यानादि अष्टौ अधिकरणानि विचारितानि, आहत्य २८ सूत्राणि च।

द्वितीयाध्यायस्य प्रथमे पादे- स्मृति-योगप्रत्युक्त-न विलक्षणत्व-शिष्टापरिग्रह-भोक्त्रापत्ति-आरम्भण-इतरव्यपदेश-उपसंहारदर्शन-कृत्स्न-प्रसक्ति-सर्वोपेत-प्रयोजनवत्त्व-वैषम्य-सर्वधर्मोपपत्तिरित्यादि त्रयोदश अधिकरणानि-३७ सूत्राणि च विलसितानि। द्वितीयपादे- रचनानुपपत्ति-महद्दीर्घ-परमाणुजगदकारणत्व-समुदाय-आभाव-एकस्मिन्नसम्भव-पाशुपत-उत्पत्त्यसम्भवादि अष्टौ अधिकरणानि, अस्मिन् आहत्य ४५ सूत्राणि भवन्ति। तृतीये- वियत्-मातरिश्व-असम्भव-तेज-अप्-पृथिव्यधिकार-तदभिधान-विपर्यय-अन्तराविज्ञान-चराचरव्यपाश्रय-आत्मा-ज्ञ-उत्क्रा - न्तिगति-कर्ता-तक्षा-परायत्ता-अंशादि सप्तदशाधिकरणानि, आहत्यात्र ५३ सूत्राणि। चतुर्थपादे- प्राणोत्पत्ति-सप्तगति-प्राणणुत्व-प्राणश्रैष्ठच-वायुक्रिय-मुख्यप्राणाणुत्व-ज्योतिरादि-इन्द्रिय-सञ्ज्ञामूर्तिक्लृप्तिरिति नव अधिकरणानि, अस्मिन् २२ सूत्राणि अन्तर्भवन्ति।

साधनाध्यायस्य प्रथमे- तदन्तरप्रतिपत्ति-कृतात्यय-अनिष्टादिकारी-साभाव्यापत्ति-नातिचिर-अन्याधिष्ठितादि षट् अधिकरणानि, अत्र २७ सूत्राणि भवन्ति। द्वितीयपादे - सध्या-तदभाव-कर्मानुस्मृतिशब्दविधि-मुग्धेऽर्धसम्पत्ति-उभयालिङ्ग-प्रकृतैतावत्त्वपरा- फलेति अष्टौ अधिकरणानि, अस्मिन् ४१ सूत्राणि सन्ति। तृतीये - सर्ववेदान्तप्रत्यय-उपसंहार-अन्यथात्व-व्याप्त-सर्वभेद-आनन्दादि-आध्यान-आत्मगृहीति-कार्याख्यान-समान सत्यविद्या-सम्भृति-पुरुषविद्या-वेधा-हानि सांपराय गतेरर्थवत्त्व अनियम-यावदधिकार-अक्षरधि-इयत्-अन्तर-व्यतिहार-सत्यादि कामादि-आदर-तन्निर्धारण-प्रदान-लिङ्गभूयस्त्व-ऐकात्म्य - अङ्गावबद्ध - भूमज्यायस्त्व-शब्दादिभेद-विकल्प काम्य-यथाश्रयभावादि षट्त्रिंशदधिकरणानि, भविष्यन्ति चात्र ६६ सूत्राणि। तुरीयपादे पुरुषार्थ-परामर्श-

स्तुतिमात्र-परिप्लव-अग्नीन्धनादि-सर्वापेक्षा-सर्वान्नानुमति- आश्रयकर्म-विधुर-तद्भूत- अधिकार-बहिः-स्वामी-सहकार्यान्तरविधि-अनाविष्कार-ऐहिक-मुक्तिफलादि एकादश अधिकरणानि, पादेऽस्मिन् ५२ सूत्राणि सन्ति ।

चतुर्थाध्यायस्य प्रथमे - आवृत्ति-आत्मत्वोपासन - प्रतीक-ब्रह्मदृष्टि-आदित्यादिमत्-आसीन-एकाग्रत-आप्रायण - तदधिगम - इतरासंश्लेष-अनारब्ध - अग्निहोत्रादि - विद्याज्ञानसाधन - इतरक्षपणादि चतुर्दश अधिकरणानि,१९सूत्राणि वर्तन्ते । द्वितीयपादे- वाक्-मनः-अध्यक्ष-आसृत्युपक्रम-संसारव्यपदेश-प्रतिषेध-कलाप्रलय-अविभाग - तदोक.-रश्मि-दक्षिणायने-त्यादि एकादश अधिकरणानि । अस्मिन्२१सूत्राणि दृश्यन्ते । तृतीये-अर्चिरादि - वायु - तडित्-आतिवाहिक-कार्य-अप्रतीकालम्बनादि षट् अधिकरणानि, १६ सूत्राणि भवन्ति । चतुर्थे - सम्पद्याविर्भाव-अविभागेन दृष्टत्व-बाह्य-संकल्प-अभाव-प्रदीप-जगद्व्यापारादि सप्त अधिकरणानि, २२ सूत्राणि च भविष्यन्ति । एवं श्रीशङ्कराचार्यैः प्रणीतस्य वेदान्तशास्त्रस्य सामान्यः परिचयः ।

## ३) ब्रह्मजिज्ञासाविचारः :-

"अथातो ब्रह्मजिज्ञासा" (ब्र० सू० १-१-१) इति सूत्रानुसारं जिज्ञास्यत्वेन वर्तमानं यद् ब्रह्म तत् ज्ञातं भवति उत अज्ञातमिति एकः प्रश्नः उदेति ।

ननु अत्र यदि ज्ञातः तर्हि सन्देहस्यावसर एव नास्ति, सन्देहाभावात् ब्रह्म न जिज्ञासितव्यम् । भवतु जिज्ञास्यते इति चेत् तेन न किमपि प्रयोजनं सिध्यति । अथवा ब्रह्म अज्ञातं भवति, तस्य अज्ञात-स्वरूपज्ञापनाय जिज्ञास्यते इत्यपि वक्तुं न शक्यते । यतः गगनकुसुमं अज्ञातम् । अस्य अज्ञातस्वरूपज्ञानाय या क्रियते जिज्ञासा तया वस्तुसिद्धिः न भवति । अतः अज्ञातत्वेन ब्रह्म सदिति न भवति । अगत्या ब्रह्म सदिति ज्ञातव्यत्वेन वक्तव्यम् । ज्ञाते विषये पुनः तस्मिन् विचारस्यावसरो

नास्ति । यतः सति हस्ते धृतबदरीफलं, तस्य कृते पुनः विचारः न क्रियते । एवं ब्रह्म असंन्दिग्धं च । "अयमात्मा ब्रह्म" (ब्र० उ० २-५ १९) "तत्त्वमसि" (छा० उ० ६-८-७) 'अहं ब्रह्मास्मि" (ब्र० उ० १-४-१०) इत्यादिश्रुतिभिः ब्रह्मस्वरूपमनुभवत्वेन साक्षात्क्रियते । यथा—स्फीतालोकमध्यवर्ती चक्षुषा संनिकृष्ठः घटः अस्ति वा न वेति पुनः न सन्दिह्यते । एवमेव अहमस्मि न वा इति सन्देहः नोदेति । तस्मात् विषयप्रयोजनाभावात् ब्रह्म न जिज्ञासितव्यमिति आगते पूर्वपक्षे सिद्धान्ती प्राह - अवश्यं ब्रह्मविचारे जिज्ञासा कर्तव्या इति यतः अयमात्मा ब्रह्म, तत्त्वमसि इत्यादि श्रुतिषु यद्यपि आत्मस्वरूपमेकत्वेन भासते । भासमानमेकत्वं प्रपञ्चब्रह्मणोः एवं जीवब्रह्मणोः भवति । अत्र प्रपञ्चजीवयोर्मध्ये वर्तमानधर्मत्वेन तौ स्वीक्रियेते उत न वेति प्राप्ते सन्देहे तादृशस्य सन्देहस्य निवारणाय अवश्यं ब्रह्मणः जिज्ञासा कर्तव्या भवति । अनया जिज्ञासया प्रथमं ब्रह्मस्वरूपं ज्ञायते । ज्ञातेन तेन स्वरूपेण प्रपञ्चे ब्रह्मस्वरूपं किम् ? प्रपञ्चगतधर्माः के ? एवं जीवस्वरूपं किम् ? जीवे वर्तमानाः कर्तृत्वभोक्तृत्वादयः धर्माः, एतेषां सत्यत्वं कीदृशम् ? इत्यादि विचारं कृत्वा जगतः एवं शरीरस्य मिथ्यात्वबोधनाय, एवं जीवात्मनोः निर्भेदात्मक - एकत्वज्ञानसम्पादनाय अवश्यं ब्रह्मणः जिज्ञासात्मकः विचारः आरम्भणीय एव । एवमारम्भणीयत्वेन "अथातो ब्रह्मजिज्ञासा" (ब्र० सू० १-१-१) इति अधिकरणं प्रवृत्तम् । अस्मिन्नपि शास्त्रे अधिकरणविचारः पूर्वमीमांसाशास्त्रवदेव भवति ।

## ४) ब्रह्मविचारस्य प्रयोजनम् :-

शरीरनामके वस्तुनि कालभेदानुसारं सत्यपि परिणामे बाल्याद्यवस्थादिषु अहमिति एक एव स्वीक्रियते । चार्वाकमते देहात्मनोः अभेदव्यवहारः प्रतीयते । एवं सति अहमिति प्रत्ययेन देहात्मनोर्मध्ये कः स्वीक्रियते इति जाते सन्देहे सन्देहनिवारणात्मकत्वेन ब्रह्मविचारः प्रयोजनवत्त्वं भजते । एवमेव मन इत्यन्ये, प्राण इत्यपरे, इन्द्रियाणि इत्येके इत्यादि सिद्धान्तविन्दौ उक्तानुसारमन्येषु विषयेष्वपि आत्मत्वं

मन्यन्ते केचन । विभिन्नवादिनाम् मतानुसारमात्मा न तिष्ठति इति दृढीकरणाय ब्रह्मविचारस्य प्रयोजनमस्त्येव । स्थूलोऽहं, कृशोऽहं, बधिरोऽहमन्धोऽहमित्यादि देहधर्मसाकल्येन आत्मा नास्ति इति आत्मस्वरूपप्रतिपादनात्मके मोक्षस्वरूपे जीवात्मनोः एकत्वदृढीकरणात्मकप्रयोजनाय ब्रह्मविचारस्यापेक्षा अस्त्येव । अहंप्रत्ययगम्यत्वेन यः अस्ति आत्मा, तस्य विचारः न क्रियते, किन्तु "सत्यं ज्ञानमनन्तं ब्रह्म" (तै० उ० २-१) "तस्माद्वा एतस्मादात्मनः आकाशः सम्भूतः" (तै० उ० २-१) इत्यादिश्रुत्या यस्यात्मनः बोधो भवति तस्य विचारः शास्त्रेणानेन क्रियते इत्यन्यत् प्रयोजनम् । अहमनुभवेन जीवात्मनः प्रतीतिर्जायते । सः तु संसारानुभवेन सह अनुवर्तमानः अस्ति । अनेन जीवात्मपरमात्मनोः अविरोधात निवर्त्यनिवर्तकभावः न स्यात् इति कृत्वा ब्रह्मविचारस्यापेक्षा अस्ति । कृतब्रह्मविचारेण वेदान्तगम्यं शुद्धाद्वयात्मकं ब्रह्मज्ञानं लभ्यते । अनेन ज्ञानेन तमःप्रकाशवत् निवर्त्यनिवर्तकभावः सिध्यति । आत्मविचारशास्त्रस्य मुख्यं प्रयोजनं शुद्धब्रह्मस्वरूपावाप्त्यात्मकं मुक्तिफलमेव इति ब्रह्मविचारशास्त्रस्य बहूनि प्रयोजनानि ।

## ५) तात्पर्यविषयकाङ्गविचारः :-

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥

इति श्लोकानुसारं तत्तदर्थतात्पर्यनिर्णायकत्वेन षट् लिङ्गभूतानि प्रमाणानि भविष्यन्ति । प्रकरणात् प्रतिपाद्यः यः अर्थः, तस्य प्रकरणादिनिर्देशकरणत्वेन यः अस्ति सः उपक्रमः । प्रकरणे प्रतिपादितस्यार्थस्य अन्तनिर्देशकरणत्वेन यः भवति सः उपसंहारः । उपक्रमोपसंहारौ द्वावपि एकीभूय एकस्यार्थस्य तात्पर्यं प्रतिपादयतः इति कृत्वा तयोः एकलिङ्गत्वेन व्यवहारः । प्रकरणप्रतिपाद्यत्वेन यदस्ति वस्तु, तस्य विचारः पुनः पुनः तस्मिन्नेव प्रकरणे करणात्मकं अभ्यासः इत्युच्यते । प्रकरणप्रतिपाद्यवस्तुनः ज्ञानं प्रमाणान्तरसिद्धं सत् प्रमाणान्तरा-

विषयात्मकं यत् तदपूर्वत्वमिति कथ्यते । प्रकरणे तत्र तत्र श्रूयमाणं यत् प्रयोजनं तत्फलं भवति । प्रकरणप्रतिपाद्यं यद्वस्तु तस्य प्रशंसायाः नाम अर्थवादः इति । प्रकरणप्रतिपाद्यवस्तुनः साधकत्वेन तत्र तत्र क्रियमाणा श्रूयमाणा च या युक्तिः सा उपपत्तिरिति आम्नायते । एतेषां षण्णां लिङ्गानामेकत्र समावेशः कुत्र भविष्यति ? इति वेदान्तसारे स्पष्टमुक्तम् । तथाहि – छान्दोग्योपनिषदः षष्ठाध्याये एतेषां षण्णां समावेशः दरीदृश्यते - सदेव सोम्येदमग्र आसीत् इत्युपक्रमः, ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इत्युपसंहारः । तयोः ब्रह्मविषयत्वेन ऐक्यरूपमेकं लिङ्गम् । असकृत्तत्त्वमसीत्युक्तिः अभ्यासः । मानान्तरागम्यत्वमपूर्वत्वम् । एकविज्ञानेन सर्वविज्ञानं फलम् । सृष्टिस्थितिप्रलयप्रवेशनियमनानि पञ्च अर्थवादाः । मृदादि दृष्टान्ताः उपपत्तयः । तस्मादेतैः लिङ्गैः वेदान्तानां नित्यशुद्धबुद्धमुक्तस्वभावब्रह्मात्मपरत्वं निश्चेतव्यम् । तदित्थमौपनिषदस्य आत्मतत्त्वस्य अहमनुभवे अनवभासमानत्वात् तस्यानुभवस्य अध्यस्तात्मविषयत्वं सिद्धम् ।

## ६) अहम्पदार्थविवेचनम् :-

अहमित्यनुभवस्य विषयः देहः भवति, किन्तु तस्मिन् देहे आत्मत्वमारोपितम् । अर्थात् आरोपितात्मत्वविशिष्टः यः देहः स एव अहम्पदार्थस्य विषयः भवति । यत्र यः आरोपः बाधकालीनेच्छाजन्यः आहार्यः । भ्रमकाले नेदं रजतमिति बाधनिश्चयाभावात् तत्कालीनेच्छाजन्यो न भवतीति अनाहार्यत्वम् । विमर्शानन्तरमेव नेदं रजतं इति बाधान्निश्चयोदयः । स एव आहार्यारोप इति गीयते । भ्रममूलकः यः आरोपो भवति स तु अनाहार्यारोपः इति वक्ष्यमाणत्वात्, शुक्तिकायां रजतं भासते इत्यतः तत्र रजतारोपः अनाहार्यारोपः । यथा शुक्तिः रजतरूपेण भासते तथैव देहोऽपि आत्मस्वरूपेण अहमित्यनुभवे भासते । अत एव अहमनुभवस्य विषयः अध्यस्तः आत्मा अस्ति न तु शुद्धात्मा ।

अहंपदार्थस्य ज्ञानं देहादिभ्यो निष्कृष्य असाधारणधर्मत्वेन प्रतिभासमानत्वाभावात् न सिध्यति । अपरथा लोकायतिकमतं

नोदयमासादयेत् । मम शरीरमित्युक्तिस्तु "राहोश्शिरः" इतिवत् औपचारिकी । मम शरीरमिति ब्रुवाणेनापि कस्त्वम् ? इति पृष्टेन वक्ष्यस्थलन्यस्तहस्तेन शृङ्गग्राहिकया अयमहमिति प्रतिवचनस्य दीयमानत्वेन देहात्मप्रत्ययस्य सकलानुभवसिद्धत्वात् । तदुक्तम्—

देहात्मप्रत्ययो यद्वत् प्रमाणत्वेन कल्पितः ।
लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात् ॥

इति । तथा च व्यापकस्य भेदभानस्य निवृत्तेः व्याप्यस्य गौणत्वस्य निवृत्तिरिति निरवद्यम् । भामतीकारैरप्युक्तम्– शास्त्रचिन्तकाः खल्वेदं विचारयन्ति न प्रतिपत्तारः इति । तथा चात्मगोचरस्य अध्यासात् अहमिति पदस्य आत्मरूपपरत्वं सिद्धम् ।

## ७) आत्मस्वरूपविवेचनम्

भवत्येवमात्मस्वरूपे विप्रतिपत्तिः । यद्यपि सर्वः प्राणी प्रयगात्मनः अस्तित्वं प्रत्येति - अहमस्मीति । न हि कश्चिदपि नाहमस्मीति विप्रतिपद्यते । प्रत्यगात्मैव ब्रह्म, तत्त्वमसि इति सामानाधिकरणयात् । तस्मात् आत्मतत्त्वमसन्दिग्धमिति सिद्धम् । तथापि धर्मं प्रति विप्रतिपन्नाः बहुविधाः इति न्यायेन विशेषप्रतिपत्तिरुपपद्यते एव । तथा हि - चैतन्यविशिष्ट देहमात्मा इति लौकायतिका मन्यन्ते । इन्द्रियाण्यात्मा इत्यन्ये । अन्तःकरणमात्मा इत्यपरे । क्षणभङ्गुरं सन्तत्यमानं विज्ञानमात्मेति बौद्धाः बुध्यन्ते । देहपरिमाणः आत्मेति जैनाः प्रतिजानन्ते । कर्तृत्वादिविशिष्टः परमेश्वराद्भिन्नः जीवात्मेति नैयायिकादयो वर्णयन्ति । द्रव्यबोधस्वभावमात्मा इत्याचार्याः परिचक्षते । भोक्तैव केवलं न कर्ता इति सांख्याः सङ्गिरन्ते । चिद्रूपः कर्तृत्वादिरहितः परस्मादभिन्नः प्रत्यगात्मा इत्यौपनिषदाः भाषन्ते । एवं प्रसिद्धे धर्मिणि विशेषतः विप्रतिपत्तौ तद्विशेषसंशयः युज्यते ।

एवमागतासु विप्रतिपत्तिषु अन्याः सर्वाः स्वभाष्ये खण्डयित्वा आचार्यः शङ्करः चिद्रूपः कर्तृत्वादिरहितः परस्माद्भिन्नः प्रत्यगात्मा इति

मतं व्यवस्थापयितुं श्रुतिमिमां स्वीकरोति—

एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वविश्वान्तरात्मा ।
अजो नित्यः शाश्वतोऽयं पुराणः साक्षी चैता केवलो निर्गुणश्च ॥

(श्वे० उ० ६-११) इति । यदा वेदान्तवाक्येभ्यः यथार्थभूतस्यात्मनः साक्षात्कारः भवति तदा आविद्यकमिमं संसारं तीर्त्वा स्वस्वरूपे एकत्वं प्राप्नोति पुरुषः इति स्वसिद्धान्तं स्थापयति भगवान् शङ्कराचार्यः ।

## ९) ब्रह्मणि प्रमाणम् :-

जीवब्रह्मणोः एकता उच्यते, जीवस्तु ज्ञातः ब्रह्म तु न ज्ञातम्, अज्ञाते ब्रह्मणि कथमेकता ? यदि ब्रह्म ज्ञातमित्युच्यते तर्हि किं प्रमाणम्? इति विचारे पूर्वपक्षी वदति - ननु ब्रह्मज्ञाने प्रत्यक्षं न प्रमाणं भवति, यतः ब्रह्म अतीन्द्रियपदार्थत्वेनोच्यते । अतीन्द्रियं न कदापि प्रत्यक्षीक्रियते । अनुमानेनापि ब्रह्म न सिध्यति । तत्र कारणमेतद् भवति यत्र साध्यस्य व्याप्यं लिङ्गं तिष्ठति तदनुमानमित्युच्यते । अत्र तु ब्रह्मणः व्याप्यत्वेन लिङ्गमेव नास्ति । लिङ्गाभावात् अनुमानेन ब्रह्म साधयितुं न शक्यते । उपमानप्रमाणं तु नियतविषयात्मकत्वात् तेन ब्रह्म न लक्ष्यते । ब्रह्मणि आगमप्रमाणमस्ति इत्यपि वक्तुं न शक्यते । यतः "यतो वाचो निर्वतन्ते" (तै० उ० २-९) इत्यादिश्रुत्या एव आगमेन ब्रह्मप्रमाणागम्यमिति प्रसारितम् । तस्मात् ब्रह्मणि प्रमाणं न सिध्यति । असिद्धे ब्रह्मणि कथं जीवात्मनः एकत्वमिति चेत् - उच्यते ।

प्रत्यक्षानुमानोपमानानां प्रमाणानां ब्रह्म विषयत्वाभावात् इमानि ब्रह्मणि ब्रह्मसाधने न क्षमन्ते । अन्तिममागमप्रमाणमस्त्येव । तेन ब्रह्मणः अस्तित्वे ब्रह्मस्वरूपज्ञाने प्रमाणत्वमस्त्येव । तथाहि - "तं त्वौपनिषदं पुरुषं पृच्छामि" (बृ० उ० ३-९-२६) "सदेव सौम्येदमग्र आसीत्" (छा०उ० ६-१-२) 'प्रज्ञानं ब्रह्म" "आनन्दो ब्रह्म" इत्यादिभिः श्रुतिभिः ब्रह्म आगमगम्यप्वेनोक्तम् । यद्युच्येत यतो वाचो निवर्तन्ते इति

श्रुत्या अगम्यत्वं प्रसाधितमिति । तस्य प्रत्युत्तरमेतद् भवितुं शक्यते यत् श्रुतिरेव ब्रह्मस्वरूपं निषेधति, सा एव श्रुतिः अन्यत्र ब्रह्मस्वरूपं प्रतिपादयति इति हेतोः व्यवहारिकसत्यत्वेन ब्रह्मस्वरूपं बोधयितुं न शक्यते इति तस्याः श्रुतेरभिप्रायः इति ।

## ६) अध्यासविवेचनम् :-

"अध्यासो नाम अतस्मिंस्तद्बुद्धिः" इति निश्चीयते भाष्यकारेण । तद्यथा - पुत्रभार्यादिषु विकलेषु सकलेषु वा अहमेव विकलः सकलो वेति बाह्यधर्मान् अध्यस्यति । स्थूलोऽहं कृशोऽहं गौरोऽहं तिष्ठामि गच्छामि लङ्घयामि इत्यादि देहधर्मान् स्वात्मनि अध्यस्यति । तथा इन्द्रियधर्मान्- मूकत्वम्, काणत्वम्, क्लीबत्वम्, बधिरत्वम्, अन्धत्वमित्यादीन् बुद्धीन् अतस्मिन्नात्मनि कल्पयति । एवमन्तःकरणधर्मान् - काम-सङ्कल्प-विचिकित्साध्यवसायादीन् शुद्धात्मनि आरोपयति । एवमहंप्रत्ययिनमशेष-स्वप्रचारसाक्षिणि प्रत्यगात्मन्यध्यस्य, तं च प्रत्यगात्मानं सर्वसाक्षिणं तद्विपर्ययेण अन्तःकरणादिषु अध्यस्यति ।

एवं भाष्यकाराः अध्यासस्वरूपविचारं प्रतिपाद्य जनानां सम्यगवबोधनाय सूत्रवत् वाक्यमेकमुदाजहार-"पश्वादिभिश्चाविशेषात्" इति । यथा हि पश्वादयः शब्दादिभिः श्रोत्रादीनां सम्बन्धे सति शब्दादिविज्ञाने प्रतिकूले च ततो निर्वर्तन्ते, अनुकूले च प्रवर्तन्ते, यथा दण्डोद्यतकरं पुरुषमभिमुखमुपलभ्य मां हन्तुमयमिच्छतीति पलायितुमारभन्ते, हरिततृणपूर्णपाणिमुपलभ्य तं प्रत्यभिमुखीभवन्ति एवं पुरुषा अपि व्युत्पन्नचित्ताः क्रूरदृष्टीनाक्रोशतः खड्गोद्यतकरान् बलवतः उपलभ्य ततो निवर्तन्ते, तद्विपरीतान् प्रति प्रवर्तन्ते । अतः आत्मनः पशोश्च समानः प्रमाणप्रमेयव्यवहारः । पश्वादीनां च प्रसिद्धोऽविवेक-पुरस्सरः प्रत्यक्षादिव्यवहारः । तत्सामान्यदर्शनात् व्युत्पत्तिमतामपि पुरुषाणां प्रत्यक्षादिव्यवहारः तत्कालः समान इति निश्चीयते । एवमनादिरनन्तः नैसर्गिकोऽध्यासः मिथ्याप्रत्ययरूपः कर्तृत्वभोक्तृत्व-प्रवर्तकः सर्वलोकप्रत्यक्षः इति अध्यासविचारः पर्यवसितः ।

## १०) सत्तात्रैविध्यविचारः :-

भवति अस्माकं त्रिविधात्मिकायाः सत्तायाः विचारः। पारमार्थिकी, व्यवहारिकी, प्रातिभासिकी चेति सत्तात्रयम्। तत्र प्रातिभासिकीसत्तायाः उदाहरणम् - इदं रजतमिति। यद्यपि वाक्येऽस्मिन् ज्ञानद्वयं तिष्ठति - एकमिदमिति पारमार्थिकं ज्ञानम् अन्यत् रजतमिति प्रातिभासिकं ज्ञानं तिष्ठति, तथापि प्रतिभासमानकाले ज्ञानमेकमेव तिष्ठति - रजतज्ञानमथवा शुक्तिज्ञानमिति। यतः परमार्थभूतायां शुक्तिकायां रजतस्यारोपः क्रियते। आरोपितत्वात् फलात्मकं ज्ञानमेकमेव। चोक्तं सुरेश्वराचार्येण स्ववार्तिके—

शुक्तीदमंशचैतन्यस्थिताऽविद्या विजृम्भते।
रागादिदोषसंस्कारसचिवा रजतात्मना॥
इदमाकारवृत्त्यन्तचैतन्यस्था तथाविधा।
विवर्तते तद्रजतज्ञानाभासात्मनाऽप्यसौ॥
सत्यमिथ्यात्मनोरैक्यादेकस्तद्विषयो मनः।
तदापत्तफलैकत्वाज्ज्ञानैक्यमुपचर्यते॥

इति।

व्यवहारिकी चिन्ता अत्र तिष्ठति – अस्माभिः व्यावहारिकदशायां जाग्रत्स्वप्नसुषुप्त्यवस्थासु आत्मज्ञानसाक्षात्कारपर्यन्तं सर्वैः इष्यमाणत्वेन अनुभूयमानत्वेन च ये सन्ति विषयाः तेषां ह्यः अद्य श्वः इति कालत्रयाबाध्यत्वेन या अस्ति सत्ता सा व्यावहारिकसत्यत्वेनोच्यते इति। यथा - सोऽहम्, घटपटादयः।

ब्रह्मणः सत्ता पारमार्थिकी इत्युच्यते। एतद् ब्रह्म त्रिकालाबाध्यत्वेन कथ्यते। अत्र त्रिकालाबाध्यत्वं परमार्थत्वेनोच्यते। ब्रह्मज्ञानानन्तरं पुनरपि तस्य जीवस्य जन्म नास्ति इत्यतः परमार्थत्वेन इयं सत्ता स्वीक्रियते। इयं सत्ता केवलमागमप्रमाणगम्या भवति। त्रिविधानां सत्तानां स्वरूपमेवं प्रतिपादितं वेदान्तग्रन्थेषु—

कालत्रये ज्ञातृकाले प्रतीतिसमये तथा ।
बाधाभावात् पदार्थानां सत्त्वं त्रैविध्यमिष्यते ॥
तात्विकं ब्रह्मणा सत्त्वं व्योमादेर्व्यावहारिकम् ।
शुक्त्यादेरर्थजातस्य प्रातिभासिकमिष्यते ॥
लौकिकेन प्रमाणेन यद् बाध्यं लौकिकेऽवधौ ।
तत् प्रातिभासिकं सत्वं बाध्यं सत्येव मातरि ॥
वैदिकेन प्रमाणेन यद् बाध्यं वैदिकेऽवधौ ।
तद् व्यावहारिकं सत्वं बाध्यं मात्रा सदेव तत् ॥

इति । अर्थात् ब्रह्मणः तात्विकी सत्ता पारमार्थिकी, आकाशादीनां सत्ता व्यावहारिकी, शुक्त्यादिषु रजतादिप्रतीतिरूपा या सत्ता सा प्रातिभासिकी इति सत्तात्रयाणां विचारः ।

## ११) मायाविद्ययोः स्वरूपविवेचनम् :-

सत्वरजस्तमोगुणात्मिका या प्रकृतिः सा द्विविधा – शुद्धसत्वप्रधाना,मलिनसत्वप्रधाना चेति । तत्र शुद्धसत्वप्रधाना माया इत्युच्यते । मलिनसत्वप्रधाना अविद्या इत्युच्यते । चोक्तं पञ्चदश्याम् –

सत्वशुद्ध्यविशुद्धाभ्यां मायाविद्ये च ते मते ॥
मायाबिम्बो वशीकृत्य तां स्यात्सर्वज्ञ ईश्वरः ।
अविद्यावशगस्त्वन्यः तद् वैचित्र्यादनेकधा ॥(पञ्च० १-१६-१७)

इति । तथा च ब्रह्म मायामयमविद्यामयमिति द्विविधत्वेन व्यवह्रियते व्यवहारिकदशायाम् । व्यावहारिकदशायामित्युक्तत्वात् परमार्थतः एकं ब्रह्म इत्यर्थतः सिद्धम् । शुक्तिरजतमित्यत्र भवति यद् भानं तदविद्यायाः परिणामः, न तु मायायाः इति वेदान्तग्रन्थे सुष्टु प्रतिपादितम् । समान्यतः स्वभावतश्च प्रश्नोऽयमुदेति यत् मायाविद्ये परस्परमभिन्ने उत भिन्ने इति । अस्योत्तरत्वेन उपरि प्रतिपादितः श्लोकः भवति । अस्मात् श्लोकात् मायाविद्ये परस्परं भिन्ने स्तः तत्तदुपाधिवशेन इति सिद्धम् । स्वाश्रयमप्यामोहयन्ती कर्तुरिच्छाम-

नुसरन्ती माया, तद्विपरीता अविद्या इति तयोः लक्षणमुक्तम्। केचन वदन्ति-अविद्यायां ये धर्माः सन्ति-अनिर्वचनीयता,तत्त्वप्रतीतिप्रतिवन्धकता, विपरीतज्ञानावभासकता इत्येते मायायामपि सन्तीति कृत्वा परमार्थतः मायाविद्ये इति एकं तत्त्वमिति। एते "भूयश्चान्ते विश्वमायानिवृत्तिः" इति श्रुतिमुपोद्बलकत्वेन स्वीकुर्वन्ति। मतमेतद् तेषामेव भवति।

ब्रह्मणि शक्तिद्वयमस्तीति उच्यते - एका विक्षेपात्मिका अन्या आवरणात्मिका इति। भवत्ययं श्लोकः—

माया विक्षिपदज्ञानमीशेच्छा वशवर्तिता।
अविद्याऽच्छादयत्तत्वं स्वातन्त्र्यानुविधायिका॥

इति। अयं भावः- विक्षेपशक्तिविशिष्टपरमात्मनः इच्छानुसारं वशीकृतं यदज्ञानं तत् माया इत्युच्यते। आवरणशक्तिविशिष्टपरमात्मनः स्वतन्त्रत्वेन वर्तमानं यदज्ञानं तत् अविद्या इत्युच्यते। अनेन अयं निष्कर्षः - अवस्था एवमुपाधिभेदेन मायाविद्ययोः भेदः भासितः भवति। यदि एतौ आत्मनः शक्तित्वेन स्वीक्रियते तर्हि ब्रह्म एकं वस्तु इत्यभ्युपगमात् तस्य शक्तिरपि एका एव भवितुमर्हति इति व्यवहारात् मायाविद्ये भेदाभेदत्वेन वर्तेते इत्यपि वक्तुं शक्यते। सिद्धे च सति भेदाभेदे, तयोः एकत्वमपि सिध्यति इति एकत्ववादिनां पक्षः।

## १२) अविद्यायाः प्रमाणम् :-

इदानीमेकः प्रश्नः समुदेति यत् अविद्यायाः अस्तित्वे किं प्रमाणमिति? समाधानत्वेन "अहमज्ञः, मामन्यं च न जानामि" इत्यादि सांव्यवहारिकं वचनमेव अविद्यायाः सत्वे प्रमाणं भवति इत्युच्यते। एतादृशः प्रत्यक्षानुभवः सर्वेषु प्राणिषु दरीदृश्यते तत्तद्व्यवहारदशायाम्। अस्मिन् अनुभवे आत्माश्रयत्वेन बाह्याध्यात्मनि व्यक्तायाः एकस्याः जडात्मिकशक्तेरनुभूतिस्तिष्ठति। एतदनुभूयमानमज्ञानं ज्ञानस्याभाव-रूपमपि न भवति। किन्तु ज्ञानभिन्नाभावरूपातिरिक्तः अन्यः पदार्थः

इत्युच्यते। यतो हि पदार्थत्वेन स्वीकृतमेतद् अज्ञानं वस्तु भावरूपत्वेन दृश्यमानप्रपञ्चस्य उपादानकारणं भवति। यदि इयमविद्या ज्ञानाभावस्वरूपत्वेन चिन्त्यते तदा दृश्यमानभावरूपजगतः उपादानकारणत्वेनास्ति इति न सिध्यति। अभावस्तु न कस्यापि उपादानत्वेन तिष्ठति।

"अहमज्ञः" इत्यत्र यद् भवति ज्ञानं तत् प्रत्यक्षं न भवति, अपितु तत् परोक्षज्ञानमिति नच वाच्यम्। अत्र कारणमेतद् अस्ति–यदि परोक्ष्येण मन्यते तर्हि अनुमानादि अन्यतमप्रमाणेन तस्य ग्रहणं भविष्यति। अनुमानशब्दार्थापत्त्यादि त्रिषु प्रमाणेषु न केनापि अस्य ज्ञानं सिध्यति। यस्मात् प्रत्यक्षेतरत्वेन यानि सन्ति कियन्ति प्रमाणानि तेषां कारणं ज्ञानं, सत्यप्येवं तानि अनुमानादीनि ज्ञानस्य कारणत्वेन तिष्ठन्ति। तद्यथा – अनुमानप्रमाणस्य हेतुः यल्लिङ्गज्ञानं, अर्थात् ज्ञातलिङ्गं तदनुमितिजनकं भवति। शब्दजन्यबोधेऽपि शाब्दं ज्ञनम् एवमेव अर्थापत्तिस्थले अनुपपद्यमानमर्थज्ञानं कारणं भवति। अर्थात् अज्ञातशब्दोऽपि शाब्दबोधे न कारणं भवति, अत एव बधिरस्य शब्दज्ञानं नास्तीत्युचयते। अर्थापत्तावपि - "पीनो देवदत्तः दिवा न भुङ्क्ते" इत्यत्रापि देवदत्तस्य दिवाभोजनं विनापि तस्य पीनत्वेन रात्रिभोजनरूपार्थस्य बोधकं भवत्येव। प्रकृते तु "अहमज्ञः" इत्यत्र लिङ्गादिज्ञानानामसम्भवात् तस्य परोक्षप्रतिभासत्वं न सिध्यति।

तथाच एतत्सिद्धमस्ति यत् "अहमज्ञः" इत्यादिज्ञानाभावविषयकत्वेन यद् ज्ञानं तदनुभवस्वरूपात्मकमिति। अतः तत्र अनुभवस्यापेक्षा अनिवार्यतया कर्तव्या एव। सति अनुभवे तस्याभावः न तिष्ठति। अन्तःकरणे आत्मनः अभेदभ्रमः यदा जायते तस्मिन् समये आत्मान्तःकरणयोः भेदप्रतीतिः नास्ति। यस्मिन्नन्तःकरणं आत्मनः अध्यासः, स एवाध्यासः अन्तःकरणस्य विषयाकारत्वेन परिणमति। अपिच तस्य परिणामस्य यः आश्रयः स एव ज्ञाता इति कथ्यते। अध्यास एव अविद्येति उच्यते। तथा चोक्तं शाङ्करभाष्ये—

"तमेतमेवंलक्षणमध्यासं पण्डिताः अविद्येति मन्यन्ते" (ब्र० सू० शा० भा० १-१-१, अध्यासभाष्यम्) इति । तस्मात् "अहमज्ञः" इति प्रत्यक्षानुभवेन अविद्यायाः सिद्धिः इति कृत्वा अविद्यायां प्रत्यक्षप्रमाणं सिद्धं भवति ।

## १३) अविद्यायाः आश्रयः :-

वाचस्पतिमिश्रमहोदयानां मतानुसारमविद्यायाः आश्रयः जीवः, एवं विषयः ब्रह्म इति । अर्थात् मायोपाधिकः ईश्वरः, अविद्योपाधिकः जीवः इत्युक्तत्वात् ब्रह्मविषयिकी अविद्या जीवाश्रिता इति सिद्धम् । एतेषां वचनानुसारं यदि ब्रह्मणि अविद्याश्रयत्वं मन्यते तर्हि जीववत् ब्रह्म अपि अज्ञः इति स्यादिति । अतः जीव एव अविद्याश्रयत्वेन अस्ति इत्यभ्युपगन्तव्यम् । विवरणकाराणां संक्षेपशारीरकाणां च पक्षे तु एतन्मतं भवति – अविद्याश्रयः शुद्धचैतन्यस्वरूपः इति । एतेषामुक्तिः जीवस्तु औपाधिकः, अविद्योपाधिकरणानन्तरमेव जीवसंज्ञा भवति । जीवसंज्ञायाः पूर्वं अविद्याश्रयत्वेन विशुद्धब्रह्म एवेति भवति । अभिहितं संक्षेपशारीरके—

आश्रयत्वविषयत्वभागिनी निर्विशेषचितिरेव केवला ।
पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः ॥

इति । श्लोकार्थः स्पष्टः ।

## १४) मिथ्यात्वविचारः :-

यद्यपि आत्मनः एकत्वे अन्यत् सर्वं मिथ्या इति सिध्यति तथापि संक्षेपेण तस्य मिथ्यात्वस्वरूपस्यापि उपवर्णनं भवति । तथा हि— दृश्यप्रपञ्चः बुद्ध्यादयश्च मिथ्याभूताः इति अस्मिन् वेदान्तशास्त्रे प्रतिपाद्यते । अद्वितीयः सः परमात्मा स्वशक्त्या विचित्ररूपेण परिदृश्यमानममुं प्रपञ्चं सृजति, अनन्तरं च सृष्टं सर्वं जगत् स्वात्मनि विलीनं करोति । प्रपञ्चस्य जन्मनाशौ भवतः इति श्रुतिस्मृतिभ्यामभ्युपगतत्वात् दृश्यमानः प्रपञ्चः मिथ्या भवति । यद्यत् उत्पत्तिमत् तत्तत् मिथ्या भवति इति निश्चीयते । ऋग्वेदोक्तपुरुषसूक्तानुसारं

प्रपञ्चस्य सृष्टिरनुभूयते साम्प्रदायिकैः। बुद्धयादयस्तु जीवस्य धर्माः भवन्ति। शरीरे आत्मनः प्रवेशानन्तरं तत्र तस्य बुद्धयादयः विषयानुसारं जायन्ते। यदा उपाधिभूतशरीरात् आत्मा निर्गच्छति तदा सर्वे बुद्धयादयः तस्मिन् लीयन्ते। अतः बुद्धयादयोऽपि मिथ्याभूता इति कथ्यन्ते। अत एवोच्यते साम्प्रदायिकैः—

ब्रह्म सत्यं जगन्मिथ्या अभेदः परमार्थतः।

इति। परिदृश्यमानाः नामरूपादिविशिष्टाः एते जीवात्मानः, भूत-भौतिकप्रपञ्चस्य तस्मात् परमात्मनः उत्पद्यन्त इति शास्त्रादवगम्यते। अतः दृश्यमानं सर्वं मिथ्या इति अस्मदाचार्यैः निश्चप्रचं निश्चीयते।

## १५) अद्वैतमते तत्त्वानि :-

वेदान्तनये अपि तत्त्वानि भविष्यन्ति। तद्यथा—ब्रह्म, सगुणब्रह्म, निर्गुणब्रह्म, सोपाधिकः, सर्वज्ञः, परमेश्वरः, जीवः, जीवस्वरूपम्, आत्मनः स्वयंज्योतिष्ट्वम्, जीवात्म-परमात्मनोः ऐक्यम्, तयोः जीवात्मपर-मात्मनोः अभेदप्रतिपादनम्, मायोपाधिना ईश्वरः, अविद्योपाधिना जीवः इति प्रतिपादनम्, अविद्या, माया उपाधिः, संसारस्य अनादित्वम्, सृष्टिः, जगत्, सृष्टिविषये ब्रह्मणः उपादानकारणत्वं, निमित्तकारण-त्वम्, प्रपञ्चमिथ्यात्वम्, जाग्रत्स्वप्नसुषुप्त्याद्यवस्थानां प्रतिपादनं, स्वप्नदृष्टान्तः, पञ्चमहाभूतानां विवेचनं, पञ्चज्ञानेन्द्रियाणि, एवमन्तःकरणस्योत्पत्तिः, पञ्च कर्मेन्द्रियाणि, तथा प्राणस्योत्पत्तिः, स्थूलशरीरम्, लिङ्गशरीरम्, कारणशरीरम्, सत्तात्रैविध्यम्, ब्रह्मणि पञ्चभूतानां लयः, सृष्टेः पूर्वं ब्रह्मणः अद्वितीयत्वं, नामरूपात्मक-प्रपञ्चनिरूपणम्, नामरूपातीतस्य ब्रह्मणः स्वरूपप्रतिपादनमित्यादीनि तत्त्वानि प्रतिपादितानि, एवं तेषां तत्त्वानां स्वरूपविवेचनमपि सम्यक् प्रसाधितम्।

## १६) सृष्टिक्रमनिरूपणम् :-

सृष्टिविषये भवतीयं श्रुतिः –



तस्माद्वा एतस्मादात्मनः आकाशः सम्भूतः । आकाशाद्वायुः ।
वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी । पृथिव्या ओषधयः ।
ओषधीभ्यो अन्नम् । (तै० उ० २-१)

इति । श्रुतेरस्याः अनुसारमात्मनः सकाशात् पञ्च महाभूतानि आकाशवायुतेजोजलपृथिव्याख्यानि उत्पन्नानि । पञ्चभूतानां मध्ये "सूत्रे मणिगणा इव" इति न्यायानुसारमात्मा एवास्तीत्यतः प्रपञ्चेऽपि आत्मस्वरूपमस्तीति सिद्धम् । एतेषां पञ्चभूतानां पञ्चीकरणेन प्रपञ्चः उत्पद्यते । उक्तं च पञ्चदश्याम्—

द्विधा विधाय चैकैकं चतुर्धा प्रथमं पुनः ।
स्वस्वेतरद्वितीयांशैर्योजनात् पञ्च पञ्च ते ।।

इति । एवंक्रमेण घटपटादिरूपेण परिदृश्यमानमेतद् जगत् पञ्चभूतानां सकाशात् उत्पन्नमिति सिद्धम् ।

पांचभौतिकं शरीरमित्युच्यते । अस्मिन् शरीरे पंचभूतानां प्रभावः कीदृशः ? इति शङ्कासमाधानत्वेनोच्यते - शरीरमेतद् पार्थिवं भवति । अर्थात् पृथिव्याः अर्धांशः अस्मिन् शरीरे तिष्ठति । अवशिष्टार्धांशे भूतचतुष्टयानां चत्वारः पादांशाः तिष्ठन्ति । तथाच शरीरं पांचभौतिकं भवति । पुनश्च देहे अस्मिन् कार्यकारणत्वेन एकादशेन्द्रियाणि सन्ति, तत्र दशानामिन्द्रियाणामध्यक्षम् मनः इत्युच्यते । सन्ति पंचमहाभूतानि, तेषु एकैकस्मिन् सन्ति त्रयो गुणाः सत्वरजस्तमांसि । तत्र आकाशादिपंचभूतेषु वर्तमानसत्त्वांशेन क्रमात् श्रोत्रत्वगक्षिरसनघ्राणाख्यानि पंच ज्ञानेन्द्रियाणि उत्पन्नानि । इमानि पंच इन्द्रियाणि क्रमात् शब्दादिविषयग्राहकाणि भवन्ति । सम्भूय वर्तमानैः ज्ञानेन्द्रियैः अन्तःकरणमुत्पन्नम् । तदन्तःकरणं चिदहङ्कारबुद्धिमनोरूपेण चतुर्धा भिद्यते । एवं आकाशादिपंचभूतानां रजोंशेन पंच कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थाभिधानानि उत्पन्नानि । एतेषां विषयत्वेन उक्त्यादानगमनविसर्गानन्दात्मिकाः क्रियाः प्रसिद्धाः लोके । संहितैः पंच कर्मेन्द्रियैः प्राणः उत्पन्नः । अयं प्राणः स्थानविशेषेण वृत्तिभेदेन च

प्राणापानव्यानोदानसमानाभिधायकत्वेन पंचधा व्यवहारं प्राप्नोति। पंचभूतानां तमोंशेन प्रपंचः इत्युक्ते शरीरादयः उत्पद्यन्ते। तथा च प्रत्येकस्मिन् शरीरे गुणत्रयाणां सत्वं सिद्धम्। एवं पंचभूतानाम् माध्यमेन उत्पन्ने प्रपञ्चे, निर्मिते च शरीरे सत्यज्ञानानन्दात्मकः एकः आत्मा लीलाकैवल्येन प्रवेशं कृत्वा तत्तद्रूपेण भासते इति सृष्टिनिरूपणम्।

## १७) परिणामवादः :-

अद्वैतिनस्तावत् द्विविधाः- परिणामाद्वैतिनः, विवर्ताद्वैतिनश्चेति। तत्र भास्कर - भर्तृप्रपंच - यादवप्रकाशादयः परिणामाद्वैतिनः। तेषु भास्करः उपाधिपरिणामस्वीकर्ता। बृहदारण्यकव्याख्याता भर्तृप्रपंचः, ब्रह्मसूत्रभाष्यरचयिता यादवप्रकाशश्च स्वरूपपरिणामवादमेव स्वीचक्रतुः। विवर्ताद्वैतवादस्तु शङ्कराचार्यसम्मतः। तत्र परिणामो नाम उपादानसमसत्ताकान्यथाभावः। विवर्तस्तु उपादानविषमसत्ताकोऽन्यथाभावः इति परिणामविवर्तयोः भेदः।

परिणामवादः- परिणामाद्वैतिनां मते ब्रह्म सविशेषमेव। विजातीयविशेषाणां स्वगतविशेषाणां च ब्रह्मणि अभ्युपगमात्। परं तु एतेषां मते वस्तुतः जीवब्रह्मणोः भेदानभ्युपगमात् स्वाभाविकभेदस्वीकाराच्च सजातीयाः विशेषाः परं न स्वीक्रियन्ते। एतेषां मते उपादानोपादेययोः भेदाभेदः तन्निबन्धनं च सामानाधिकरण्यम्।

आचार्याः रामानुजाचार्याः अपि परिणामाद्वैतमेव उपस्थापयामासुः। तत्र एतावान् भेदः - सिद्धान्ते हि जीवब्रह्मणोः स्वाभाविकभेदानभ्युपगमात् भेदस्य सुस्थिरत्वेन सजातीयविशेषा अपि स्वीक्रियन्त इति सजातीय-विजातीय-स्वगतविशेषणरूपविशेषत्रय-विशिष्टं ब्रह्म इति। तस्मात् एते आचार्याः विशिष्टाद्वैतमतप्रवर्तयितारः इति प्रथां प्रापुः। एतेषां मते तु स्वसिद्धान्तसम्मतपरिणामाद्वैतव्यतिरिक्तपरिणामाद्वैतस्य वेदान्तसङ्ग्रहादिषु विस्तरेण निष्कासः क्रियते।

## १८) विवर्तवादः :-

विवर्ताद्वैतिनो हि मन्यन्ते – अशेषविशेषप्रत्यनीकं प्रत्यक् स्वयंज्योतिः चिन्मात्रं ब्रह्मैव परमार्थः। तद्व्यतिरिक्तं सर्वं मिथ्या। "एतद्वै सत्यकाम परं चापरं च ब्रह्म" "द्वे विद्ये वेदितव्ये" इत्यादि श्रुत्यनुसारेण परमपरं चेति द्विविधं ब्रह्म आम्नातं भवति। तत्र परविद्याविषयः परं ब्रह्म निर्विशेषम्। तज्ज्ञानं च नित्यमोक्षकारणम्। अपरविद्याविषयः अपरं ब्रह्म सविशेषम्। तदुपासनं च गतिद्वारकत्तरतमभावापन्नफलसाधनं क्रममुक्तिहेतुश्च। तं यथा यथोपासते तदेव भवति इति वचनेन उपासनानुगुणस्यैव फलस्य निर्णयात्।

ब्रह्म च विवर्तोपादानमेव। तत्र विवर्तो नाम उपादानविषमसत्ताकः अन्यथाभावः इति प्रागेवोक्तम्। ब्रह्मणः पारमार्थिकसत्तावत्त्वात् प्रपञ्चस्य च व्यावहारिकसत्तावत्त्वात् उपादानापेक्षया विषमसत्ताकत्वम्। जगदादौ च आत्मा एक एवासीत्। स च व्योमादिसकलप्रपञ्चरूपेण परिणमति। यथा वा बीजं वृक्षरूपेण।

ननु कथं चिन्मात्रं ब्रह्म जडरूपेण परिणामं लभते इति चेत् – न। ब्रह्मणि परमार्थतः कश्चित् परिणामो नाम नास्ति। किं तर्हि? वस्तुतः अपरिणतमेव परिणामविशिष्टमिव भाति। एकमेव सत् अनेकधैव च अविद्यावशात् विवर्तमानं आत्मैव, आत्मानं चिद्रूपं जडरूपमिव अद्वितीयं सद्वितीयमिति च जानाति। तथा च अविद्योपादानात्मकस्वप्नादिप्रपञ्चवत् महदादिप्रपञ्चसृष्टिः। अत एव च "सर्वं खल्विदं ब्रह्म" "आत्मैवेदं सर्वम्" "नेह नानास्ति किञ्चन" "सदेव सोम्येदमग्र आसीत्" (छा० उ० ६.२-१) इत्यादयः श्रुतयः अद्वैतवादमुद्घुष्यन्ति। एवमेव वेदेऽपि – "इन्द्रो मायाभिः पुरुरूप ईयते" (ऋ० स० ६.४.७-१८) "रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय" (ऋ० सं० ६-४७-१८) इत्यात्मिकाः ऋचः स्फुटतयैव भेदज्ञानस्य मायानिबन्धनत्वं प्रतिपादयन्ति। एवं श्रुत्यन्तरे भेददर्शननिन्दा च स्पष्टा भवति – "मृत्योस्स मृत्युमाप्नोति य इह नानेव

पश्यति" इति। ततश्च अद्वितीयं ब्रह्मैव पारमार्थिकं, भेदज्ञानं च अविद्योपाधिकमेव इति निश्चेतव्यम्।

ब्रह्मणि न कोऽपि धर्मः अस्ति, निर्धर्मकत्वात्। कूटस्थत्वात् नित्यशुद्धबुद्धमुक्तस्वभावत्वाच्च। आहुश्च शङ्कराचार्याः बृहदारण्यकोपनिषद्भाष्ये - "न च निरवयवं विक्रियमाणं दृष्टं क्वचित्" (बृ०उ० शा० भा० ३-४-७) इति। अन्यत्र च - "न च निरवयवस्य (अनौपाधिक) अनेकधर्मवत्त्वे दृष्टान्तोऽस्ति" (बृ० उ० शा० भा० ६-३-२४) इति च। सर्वज्ञात्ममुनिभिरपि अयमेव सिद्धान्तः प्रतिपादितोऽस्ति संक्षेपशारीरके-

विवर्तवादस्य हि पूर्वभूमिः वेदान्तवादे परिणामवादः।
व्यवस्थितेऽस्मिन् परिणामवादे स्वयं समायाति विवर्तवादः॥

इति परिणामवादोऽपि विवर्तवादौपयिकः एवेति विशदीकृतम्। अमुमेव सिद्धान्तं पुरस्कृत्य कल्पतरुकारः एवमाह - वाक्यकारी हि - नासतोऽनिस्पाद्यत्वात्, प्रवृत्त्यानर्थक्यं तु सत्त्वाविशेषात् इति प्रपञ्चस्य सदसत् प्रश्ननिरसनेन पूर्वपक्षं प्रदर्श्य "संव्यवहारमात्रत्वात्" इति प्रपञ्चस्य अनिर्वचनीयतां सिद्धान्तयति इति। संक्षेपशारीरकेऽपि - "अद्वैतमेव परिरक्षति वाक्यकारः" इत्यभ्यधायि। तथा च – "स्वयंज्योतिषः प्रत्यग्वस्तुनः एकबुद्ध्यनधिगम्य पराग्बुद्धिगम्यधर्मवत्त्वं नैव घटते' (बृ० वा० ६-४) इति वार्तिककारसिद्धान्तोऽपि विवर्तवादानुकूल एवेति निर्णयः सुलभः भवति।

एवं समन्वयाधिकरणे आचार्याः शङ्कराः एवमाचक्षन्-"किंचित् परिणामनित्यम्, किंचित् कूटस्थनित्यम्। इदं तु पारमार्थिकं कूटस्थनित्यम् व्योमवत् सर्वव्यापि सर्वविक्रियारहितं नित्यतृप्तं स्वयंज्योतिःस्वभावम्' (ब्र० सू० १-१-४) इति। एतद् भाष्यविवरणाय प्रवृत्ताः वाचस्पतिमिश्रा अपि - परिणामतद्वतोः भेदाभेदविकल्पनेन अनिर्वचनीयत्वमेव इति प्रकटीचक्रुः। किंच सर्वैरपि वादिभिः मोक्षस्य नित्यत्वं तावदङ्गीक्रियते। तच्चेदं पारमार्थिकं कूटस्थनित्यत्वस्वीकर्तॄणामेव स्वरसतः सङ्गच्छते। सगुणात्मवादे कूटस्थानङ्गीकारे नित्यफलमेव

नोपपादयितुं शक्यत इति अनन्तस्थिरफलत्वं मोक्षत्वमपि उपपादयितुं न शक्यते । अतः ब्रह्मणः परिणाम्युपादानत्वं नैव युक्तम् इति विवर्तवादविचारः ।

## १६) ख्यातिविचारः :-

आत्मख्यातिरसत्ख्यातिरख्यातिः ख्यातिमन्यथा ।
तथाऽनिर्वचनीयख्यातिः इत्येतत् ख्यातिपञ्चकम् ॥

इति श्लोकानुसारं पञ्च ख्यातयः सन्ति इति निश्चीयते । अत्र आत्मख्यातिवादिनः सांख्याः, यौगिकाश्च । असत्ख्यातिवादिनः बौद्धाः। अख्यातिवादिनः प्राभाकरादि मीमांसकाः । अन्यथाख्यातिवादिनः नैयायिकाः । अनिर्वचनीयख्यातिवादिनः वेदान्तिनः इति पञ्च ख्यातिवादिनः भविष्यन्ति ।

"सतः असज्जायते" इति हि वेदान्तिनां मतम् । "कारणात्मकसत्तायाः असत्कार्यस्योत्पत्तिः" इति मायावादिनामस्माकं राद्धान्तः। प्रपञ्चस्य व्यावहारिकी सत्ता स्वीक्रियते, न तु पारमार्थिकी । अतः प्रपञ्चस्य व्यावहारिकसत्ताभ्युपगमेऽपि पारमार्थिकसत्तायाः अभावात् ब्रह्मणः कार्यजातं प्रपञ्चात्मकमसदेत्युच्यते । तस्मात् सतः असज्जायते इति वेदान्तिनां मते सिद्धम् ।

अत्रैतद् विवेचनीयम् यत् प्रपञ्चे पारमार्थिकी सत्ता न भवतीति कृत्वा प्रपञ्चः असद्रूपः इत्युक्तम्, न तु अत्यन्तासद्रूपेण वर्तमानं शशविषाणवदसत्यत्वम् इति । तस्मात् कारणात् कार्यस्योत्पत्तिः इति अस्मिन् मते असङ्गता न भवति, यतः प्रपञ्चे व्यावहारिकी सत्ता अस्ति। सत्तात्रैविध्यं प्रागेवोपन्यस्तम् । अतश्च अथातो ब्रह्मजिज्ञासा इति सूत्रोपज्ञानां निखिलानामपि ब्रह्मसूत्राणां ज्ञेयं यत् निर्गुणं परब्रह्म तत्परत्वमेवेति सिद्धम् । न तु उपास्यसगुणब्रह्मणि तेषां मुख्यं तात्पर्यमिति । एतादृशशुद्धब्रह्मप्रतिपादकानां तत्त्वमसि, अहं ब्रह्मास्मि इत्यादिश्रुतिवाक्यानामेव वेदत्वमुपनिषदत्वं च सिध्यति । अत एव च

वाक्यानां महावाक्यत्वेन समाख्या चोपपन्ना । तदितरवेदवाक्यानां च सर्वेषां स्वारसिकं न मुख्यं प्रामाण्यम् । किं तर्हि, महावाक्यशेषत्वेनैव तेषां प्रामाण्यं सिध्यतीति भावः ।

## २०) महावाक्यचतुष्टयम् :-

सत्सु बहुषु उपनिषद्वाक्येषु महावाक्यचतुष्टयमिति व्यवहारः कथं सङ्गच्छते इति शङ्कायामिदमुच्यते । कारणं तु अत्र भवति - वेदाश्चत्वारः इति कृत्वा महावाक्यचतुष्टयमिति व्यवहारः । "चत्वारो वै वेदाः" इति श्रुत्या ऋग्वेदः, यजुर्वेदः, सामवेदः, अथर्ववेदः इति वेदचतुष्टयस्य नामानि उक्तानि । चतुर्णां वेदानां मुख्यभूततया उपनिषच्चतुष्टयमभिहितम् । तत्र ऋग्वेदस्य - ऐतरेयोपनिषत्, यजुर्वेदान्तर्गतवाजसनेयसंहितायाः - बृहदारण्यकोपनिषत्, सामवेदस्य - छान्दोग्योपनिषत्, अथर्ववेदस्य- माण्डूक्योपनिषत् इति उपनिषदां व्यवहारः । स्वीकृतेषु उपनिषच्चतुष्टयेषु ऐतरेयोपनिषदः - "प्रज्ञानं ब्रह्म" बृहदारण्यकोपनिषदः - "अहं ब्रह्मास्मि" (बृ० उ० १-४-१०) छान्दोग्योपनिषदः - "तत्त्वमसि" (छा० उ० ६ ८-७) तथा माण्डूक्योपनिषदः - "अयमात्मा ब्रह्म" इति महावाक्यचतुष्टयम् । प्रथमस्तावत् ऋग्वेदान्तर्गतं 'प्रज्ञानं ब्रह्म" इति वाक्यं विचारार्थं स्वीकुर्मः ।

चक्षुर्द्वारा निर्गतान्तःकरणवृत्त्युपहितचैतन्येन दर्शनयोग्यमिदं रूपादिकं पश्यति पुरुषः,एवं श्रोत्रद्वारा शब्दजातश्रवणं करोति,घ्राणद्वारा स्वीकरोति गन्धजातम्, वागिन्द्रियावच्छिन्नेन शब्दजातं व्याहरति, रसनेन्द्रियद्वारा स्वाद्वस्वादू रसौ विजानाति, एवमुक्तानुक्तैः सकलेन्द्रियैः अन्तःकरणवृत्तिभदेश्च उपलक्षितं यच्चैतन्यमस्ति तदेवात्र प्रज्ञानमिति पदेन उच्यते । उत्तममध्यमाधमेषु देवमनुष्याश्वगवादिषु देहधारिषु आकाशादिभूतेषु च जगज्जन्मादिहेतुभूतं यदेकं चेतन्यमस्ति तद् ब्रह्म इत्युच्यते । एतेन सर्वत्रावस्थितं प्रज्ञानं ब्रह्म प्रज्ञानत्वाविशेषात् मय्यपि स्थितमिति जीवब्रह्मणोरैक्यार्थबोधकमेकमेतद् महावाक्यं भवति ।

द्वितीयं वाक्यं भवति—"अहं ब्रह्मास्मि" इति। स्वभावतः देशकालवस्तुभिरपरिच्छिन्नः परिपूर्णः परमात्मा मायाकल्पितेऽस्मिन् जगति शमदमादिसाधनसम्पन्नत्वेन विद्यासम्पादनयोग्ये मनुष्यादिशरीरे बुध्युपलक्षितस्य सूक्ष्मशरीरस्य साक्षितया अवस्थाय प्रकाशमानः यः सः लक्षणया अहंपदेनोच्यते। अयमेव परिपूर्णः परमात्मा महावाक्येऽस्मिन् ब्रह्म इत्यनेन पदेन लक्षणया उक्तः। अहं ब्रह्म इति पदद्वयसामानाधिकरण्यलभ्यं जीवब्रह्मणोः ऐक्यं अस्मि इति पदेन परामृश्यते इत्यतः एतद् द्वितीयं महावाक्यम्।

तृतीयं भवति - "तत्त्वमसि" इति वाक्येऽस्मिन् - "सदेव सम्येदमग्र आसीत्, एकमेवाद्वितीयम्" इति श्रुत्या सृष्टेः पूर्वं स्वगतादिभेदशून्यं नामरूपरहितं यत् सद्वस्तु प्रतिपादितं भवति तदेव सृष्ट्युत्तरकालेऽपि विचारदृष्ट्या तथात्वमिति तदितिपदेन लक्ष्यते। श्रवणाद्यनुष्ठानेन महावाक्यार्थप्रतिपत्तुः देहेन्द्रियोपलक्षितस्थूलादिशरीरत्रयसाक्षितया तद्विलक्षणं सद्वस्तु एव वाक्यगतेन त्वमिति पदेन लक्षितं भवति। वाक्यस्थेन असि इति पदेन तयोः तत्त्वंपदार्थयोः प्रमाणसिद्धमेकत्वं मुमक्षुभिरनुभूयतामिति तृतीयमहावाक्यविचारः।

चतुर्थम् महावाक्यं भवति "अयमात्मा ब्रह्म" इति। अयमिति शब्देन स्वप्रकाशापरोक्षत्वेन यः अस्ति सः उच्यते। प्राण-मन-इन्द्रियदेहसङ्घातस्य पुरुषस्य अहङ्कारादिः तथा देहे अन्तः यस्य उक्तसङ्घातस्य सः देहान्तः, तस्मात् प्रत्यगधिष्ठानतया साक्षितया च अन्तर्भूतः यः सः आत्मा इति गीयते। दृश्यत्वेन मिथ्याभूतस्य सर्वस्य आकाशादेः जगतः अधिष्ठानतया तद्बाधावधित्वेन च पारमार्थिकं तत्त्वं सच्चिदानन्दलक्षण यद्रूपमस्ति तत् ब्रह्मशब्देन कथ्यते। स्वप्रकाशात्मरूपं उक्तलक्षणं ब्रह्मस्वरूपं यस्य भवति स एव स्वप्रकाशात्मरूपः इति सिध्यति।

एवं चतुर्णां महावाक्यानां विवेचनम्।



## २१) मोक्षनिरूपणम् :-

आत्मज्ञानसाक्षात्कारः एव मोक्षः इति अद्वैतदार्शनिकाः । शाङ्करदर्शनेऽस्मिन् प्रतिपाद्यमाने मोक्षस्वरूपे आत्मज्ञानसाक्षात्कारे अनुभवस्यैव प्रामुख्यं दीयते । न तु प्रत्यक्षादिप्रमाणानामिति । अवस्थाः एव हि तावत् न प्रत्यक्षादिगम्याः, प्रागेव चात्मा स्वयंसिद्धः । न हि तत्र इन्द्रियालोचनस्य पुरुषमतिप्रभवस्य तर्कस्य वा अवकाशोऽस्ति । तदविषयत्वात् । शास्त्राचार्योपदेशरूपागमस्तु अतद्धर्मनिरासकत्व-मात्रेणानुभवसिद्धमात्मानमावेदयतीति तत्र प्रमाणत्वेन उपचर्यते इत्यन्यदेतत् । उपपत्तिरप्यत्र प्रक्रियायामानीयमाना श्रुत्यनुगृहीता तदविरोधितर्करूपा वेति साप्यनुभवायत्ता एवेति न पृथक् प्रमाणत्वेन परिगण्यते । अनुभवशब्देन चात्र न पातञ्जलादितन्त्रान्तरीययोगज-समाधिजन्यः तपोमन्त्रादिसिद्धिजन्यो वा प्रत्यक्षादिप्रमाणजन्यानुभवो वा वैयक्तिकवेदनादिरूपानुभवो वा व्यपदिश्यते । किं तु सर्वजनसाधारणः स्वाभाविकः एव सः मोक्षस्वरूपः, यः खलु इन्द्रियान्तःकरणव्यापारानपेक्षो जाग्रदादि सर्वावस्थानां साक्षाद्विज्ञापकः, सर्वैरपि वादिभिः अनपलापनीयः इति सिध्यति । तस्मात् अद्वैतमते भगवता शङ्कराचार्येण मोक्षः केवलमनुभवैकवेद्यः आत्मज्ञानसाक्षात्कारः, अयमनुभवः नान्येन प्रमाणेन सिध्यति यथा "विषभक्षणवत्" इति मोक्षस्वरूपः सिद्धान्तितः । तथा च श्रुतयः—

"ब्रह्मैव सन् ब्रह्माप्येति" (बृ०उ० ४-४-६) "स वा एष महानज आत्मा अजरोऽमरोऽमृतोऽभयो ब्रह्म" (बृ०उ० ४-४-२५) "ब्रह्मैवेदं विश्वमिदं वरिष्ठम्" (मु० उ० २-२-११) "आत्मैवेदं सर्वम्" (छा०उ० ७-२५-२) "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" (श्वे० उ० ६-१९) "तत्र को मोहः कः शोकः एकत्वमनुपश्यतः" (ईशा० ७)

इत्येवमादयः स्वयमनुसन्धेयाः भविष्यन्ति । इति शङ्कराचार्याभ्युपगतं वेदान्तदर्शनम् ॥



# सप्तमोऽध्यायः - चार्वाकदर्शनम्

## ७-१) चार्वाकदर्शनम् :-

उपनिषद्ग्रन्थानां विमर्शानुसारं मुख्यत्वेन सम्प्रदायद्वयस्य जन्म मिलिष्यति — आस्तिक - नास्तिकभेदेन । इमौ द्वावपि सम्प्रदायौ समानत्वेन कालचक्रे प्रथितौ भवतः । वैदिकयुगे इन्द्रवरूणादिदेवतानां प्रतिष्ठा सञ्जाता, एवमुपनिषत्सु निर्गुणब्रह्मणः प्रतिपादनं कृतम् । उपनिषत्सु प्रतिपादितमेतत्तत्त्वं सर्वजनसाधारणानां कृते ज्ञातव्यत्वेन अर्थवत्वं न अलभत । अतः एते सामान्यजनाः उपनिषत्सु प्रतिपाद्यमानं तत्त्वं न समर्थितवन्तः । अन्ते परिणामत्वेन धर्मः एवं ज्ञानमिति परम्पराभेदेन अनुस्यूततया इदानीमपि मार्गद्वयं तिष्ठति ।

नास्तिकदर्शनं तु अनार्यवर्गस्य प्रतिनिधित्वेन अस्तित्वं प्राप्य इदानीमपि जनेषु तेष्वेषु अस्ति । एतद्दर्शनं निरन्तरप्रत्यक्षपरीक्षणेन सफलत्वं प्राप्तम् । एते श्रुतीनां प्रामाण्यं केनापि प्रकारेण न स्वीकरिष्यन्ति । अतः एते वेदवाह्याः इति कथ्यन्ते । एतैः प्रतिपाद्यमानं तत्त्वं आस्तिकमतविरोधित्वेन अस्तीति कृत्वा एते चार्वाकादयः नास्तिकाः इत्युच्यन्ते । नास्तिकाः भौतिकवादिनः ।

एवं नास्तिकदर्शनेषु चार्वाकः भवति जडवादी । अस्य मतानुसारं प्रत्यक्षमेकमेव प्रमाणं तिष्ठति । अनुमानशब्दादयः अप्रत्यक्षप्रमाणत्वेन स्वीक्रियन्ते । सर्वे विषयाः सन्दिग्धाः अथवा भ्रमपूर्वकाः इत्येषां सिद्धान्तः । अतः प्रत्यक्षप्रमाणेन ज्ञातवस्तूनामतिरिक्तत्वेन अन्यत् न किमपि वस्तु अस्तित्वं भजते इति एतेषां विचारः । केचन चार्वाकाः

निकृष्ठभूतानां इन्द्रियसुखसम्पादनमेव स्वजीवनस्य आदर्श मन्यते । चार्वाकानां मध्ये वर्गद्वयं तिष्ठति - धूर्तसुशिक्षितभेदेन । तत्र धूर्ताः अशिक्षिताः इति कृत्वा ते इन्द्रियादिविषयलम्पटाः भवन्ति । अन्ये सुशिक्षिताः उत्कृष्टसुखस्य अनुसरणं करिष्यन्ति । एतदर्थमेते ललितकलानामभ्यासं कुर्वन्ति । सर्वे चार्वाकाः न स्वार्थसुखिनः, सामाजिकव्यवस्थास्थापनार्थं केचन स्वसुखं परित्यज्यन्ति, ये राजानं ईश्वरत्वेन मन्यन्ते । "सूर्यः प्रत्यक्षदेवता" इति वदन्तः एते चार्वाकाः प्रत्यक्षवादिनः भवन्ति ।

## २) चार्वाकदर्शनपरिचयः :-

एतेषां मते प्रत्यक्षद्वारा एव भौतिकप्रपञ्चस्य ज्ञानं मिलिष्यति । जडप्रपञ्चः चतुर्विधभूततत्वानां मेलनेन उत्पन्नः । भूतचतुष्टयस्य नाम-वायुः, अग्निः, जलम्, पृथिवी इति । एतेषां तत्वानां ज्ञानमस्माकं इन्द्रियद्वारा लभ्यते । प्रपञ्चे भवन्ति क्रियन्ति द्रव्याणि, इमानि सर्वाणि च भूतचतुष्टयादुत्पन्नानि । आत्मनः अस्तित्वे न किमपि प्रमाणमस्ति । जीवः भूतचतुष्टयादेव उत्पन्नः । "अहं स्थूलः" इत्यादि सांव्यवहारिकवचनेन जीवशरीरयोः न कोऽपि भेदः अस्ति, नानुभूयते च । जीवे एकं चैतन्यमस्ति, एतद् जीवशरीरस्य विशेषगुणत्वेन स्वीक्रियते । तस्य चैतन्यस्य उत्पत्तिः भौतिकतत्त्वैः भवति । केचन वदन्ति कथमचेतनात् चैतन्यस्योत्पत्तिः ? इति, एतत् न सत्यं वचनम् । यतः केषाञ्चन वस्तूनां सम्मिश्रणेन अन्यस्य नूतनवस्तुनः उत्पत्तिः भवितुं शक्यते । ताम्बूलचर्वणेन जिह्वायां रक्तवर्णस्योत्पत्तिः, अयं वर्णः पूर्वं नासीत्, ताम्बूलमिश्रितपदार्थैः अयं वर्णः उत्पन्नः । एवमेव उत्पन्नेषु वस्तुषु नूतनानां गुणानामपि आविर्भावः भवति । एकस्मिन्नेव वस्तुनि भिन्नभिन्नावस्थासु नूतनानां गुणानामाविर्भावः भवितुं शक्यते । यथा - कामक्रोधभयभीभत्सादिषु मनुष्यस्य गुणः भिन्नत्वेन दृश्यते । यद्यपि गुडे न मादकगुणः, सति समये तस्मिन् गुडे अयं गुणः उत्पद्यते इति तु दृष्टः । भौतिकतत्त्वानां विशेषसम्मिश्रणं यदा भवति तदा

शरीरस्य निर्माणं भवति, एवं तस्मिन् शरीरे चैतन्यस्य सञ्चारोऽपि जायते। शरीरस्य नाशे चैतन्यस्यापि नाशः भवति। मरणानन्तरं अवशिष्टत्वेन किमपि न तिष्ठति इत्यतः मरणानन्तरं कर्मफलभोगस्य सम्भावना मतेऽस्मिन् नास्ति।

एते ईश्वरे प्रामाण्यं न स्वीकुर्वन्ति, यतः ईश्वरज्ञानं प्रत्यक्षेण न सिध्यति। ईश्वरास्तित्वमेव अप्रामाणिकत्वात् प्रपञ्चस्य सृष्टिकारणत्वेन एकः अस्ति इति प्रश्नः एव नोदेति। "भूतचतुष्टयसम्मिश्रणेनैव प्रपञ्चोत्पत्तिः" इति एतेषां मतानुसारं स्वर्गादिकामना एवमीश्वराराधना च निरर्थिका भवति। अतः एतेषां मतिरस्ति वेदपुरोहितेषु श्रद्धाऽश्रधाना मूर्खता इति। अतः बुद्धिमन्तः जनाः अधिकाधिकसुखप्राप्त्यर्थं सर्वदा प्रयत्नशीलाः भवेयुः। अन्यलक्ष्यापेक्षया सुखप्राप्तिरेव मुख्यलयभूता भविष्यति, यद्यपि सुखं दुःखमिश्रितं भवति अथापि सुखपरित्यागः न कर्तव्यः। "येन केन प्रकारेण प्रसिद्धो भव सत्तम" इत्युक्त्यनुसारं स्वजीवने लक्ष्यभूतसुखप्राप्त्यर्थं तन्मध्यपतितदुःखनिवारणाय सर्वदा प्रयत्नः आचरणीयः। सुखप्राप्तिरेव मोक्षः। अतः एव एतेषां सिद्धान्तः भवति — "यावज्जीवेत् सुखं जीवेत्" इति। एवं दर्शनस्यास्य परिचयः।

## ३) जडवादविचारः :-

भारतयुगे अस्मिन् जडवादप्रवर्तकः कः इति सम्यक् वक्तुं न शक्यते, परन्तु वर्तमानकाले जडवादः चार्वाकाभ्युपगतत्वेन तिष्ठति। अस्यैव जड़वादस्य लोकायतमतमित्यपि संज्ञा। यतः अयं वादः एतेषु आयतत्वेन अथवा विस्तृतत्वेन अस्ति। अतः जडवादी लोकायतिक इति पर्यायवाचित्वेत भण्यते। चार्वाकमतानुसारं दर्शने एव विश्वासः कर्तव्यः इति नीतिः जागर्ति। एतद्वाक्यमाधारीकृत्य जडवस्तु एव विश्वस्तुं योग्यः, यतः तदेव वस्तु दृष्टिपथमागच्छति। अत एवास्मिन् मते आत्मा, ईश्वरः, पुनर्जन्म, परलोकः, भविष्यम्, स्वर्गः, नरकम् इत्यादयः ये आस्तिकमते अभ्युपगम्यन्ते ते दृष्टिपथे नायान्ति इति कृत्वा एतेषां तत्वानां नास्तिकत्वमुच्यते। यदि तेषां तत्वानां जिज्ञासा

क्रियते तर्हि तादृशं आचरणं स्वकपोलकल्पिता, प्रलापार्हं मूर्खता च स्यादिति एते भणन्ति। पृथिवी, जलम्, अग्निः, वायु इत्येते चत्वारः भौतिकपदार्थाः प्रत्यक्षेण अनुभूयन्त इत्यतः इमानि भूतचतुष्टयानि निर्णायकानि भवन्ति। एतद् भूतचतुष्टयमेव जडवादस्य मूलसाधनं भवति।

सम्वेदनारहितत्वेन ज्ञानरूपहीनं यद्वस्तु तत् जडवस्तु भवति। जडपदार्थस्य प्रतियोगी चेतनः। सर्वाणि च वस्तूनि यदा चेतनावस्थारूपेण जीविताावस्थारूपेण च आगमिष्यन्ति, तत्पूर्वं तानि वस्तूनि अचेतनावस्थारूपेण तिष्ठन्ति। सर्वेषां पदार्थानां प्रथमावस्था जडरूपेण अनन्तरं चेतन्यरूपेण इति चार्वाकाणां परिणामविचारः। यत् चेतनं वस्तु तत् ज्ञान-बुद्धि-अनुभूतियुक्तत्वेन तिष्ठति। अनेन प्रकारेण मनुष्यः सर्वज्येष्ठः, किन्तु अयं मनुष्यः न शाश्वतः,न सर्वव्यापी इति चार्वाकाणां विचारः।

## ४) प्रमाणादिविचारः :-

मुख्यतया एतद् चार्वाकदर्शनं स्वप्रमाणसम्बन्धिविचारमवलम्ब्यैव तिष्ठति। विभिन्नप्रमाणानां विचारः भारतीयप्रमाणविज्ञानस्य एकमात्राङ्गत्वेन तिष्ठति। तत्वज्ञानं अथवा यथार्थज्ञानं प्रमा इति कथ्यते। प्रमायाः करणं प्रमाणम् इति वाक्यात् येन यथार्थज्ञानमुदेति तत् प्रमाणमित्युच्यते। कियन्ति प्रमाणानि इत्यत्र भारतीयदर्शनकाराणां मतभेदः अस्ति। तथा हि—

प्रत्यक्षमेकं चार्वाकाः कणादसुगतौ पुनः।
अनुमानं च तच्चापि सांख्याः शब्द च ते अपि।
न्यायैकदेशिनोऽप्येवं उपमानं च केचन।
अर्थापत्त्या सहैतानि चत्वार्याह प्रभाकरः॥
अभावषष्ठान्येतानि भाट्टा वेदान्तिनस्तथा।
सम्भवैतिह्ययुक्तानि तानि पौराणिका जगुः॥

(मानसो० २-१७-२०) इति। चार्वाकमतानुसारं प्रत्यक्षमेकमात्रं



प्रमाणम् । प्रमाणानुसारं केवलमिन्द्रियद्वारा एव विश्वासयोग्यं ज्ञानं प्राप्नोति । इन्द्रियज्ञानमेव मुख्यं यथार्थज्ञानं भवति । अस्मिन् मते अनुमानागमादिप्रमाणनां स्थानस्याभावात् मुख्यत्वं नास्ति । यतः एतेषां नये अनुमानं निश्चयात्मकं नास्ति । तत्र अनुमानप्रमाणेन संशयरहितं वास्तविकं ज्ञानं न मिलति । यत्र कुत्रापि क्वचित् स्थले काकतालीयन्यायेन चार्वाकमतेऽपि अनुमानं समीचीनतां प्राप्नोति यद्यप्येवं, तथापि बहुषु स्थलेषु एतदनुमानमसम्बन्धार्थमेव ब्रूते इति न विस्मर्तव्यम् । अतः अनुमानं सर्वदा अवश्यं प्रामाणिकार्थवत्त्वेन तिष्ठति इति नास्माभिरुच्यते । यतः अनुमानेषु वर्तमानं प्रामाणिकत्वं न स्वाभाविकधर्मत्वेन स्वीक्रियते । अत एव कानिचन अनुमानानि प्रामाणिकानि, कानिचन अप्रमाणिकानि भवन्ति ।

## ५) कार्यकारणभावविचारः :-

चार्वाकमते कार्यकारणसम्बन्धोऽपि व्याप्तित्वेन स्वीक्रियते । "कल्पना अनावश्यकी"इत्येषामुक्तिः । वस्तुद्वयस्य दर्शनं तदा तदा दृष्ट्वा अनन्तरं तयोः कार्यकारणभावसम्बन्धः कल्प्यते । एतन्न समीचीनम् । यतो हि एवं द्वयोः पदार्थयोः सम्बन्धस्थापनार्थं तयोर्द्वयोर्मध्ये वर्तमानः साहचर्यनियमः अलक्षितकारणेन अथवा अन्योपाधिवशेन न निर्भरो भवति । यावत्पर्यन्तं पदार्थद्वययोः सम्बन्धः उपाधिरहितत्वेन न तिष्ठति तावत्पर्यन्तं अनुमानप्रमाणं समीचीनाधारत्वेन न मान्यतां भजते । प्रत्यक्षप्रमाणद्वारा एतन्न सिध्यति यत् काऽपि व्याप्तिः उपाधिरहिता अस्तीति । यतः प्रत्यक्षं न व्यापकत्वेन तिष्ठति । एतदपि असम्भवात्मकं वचनं यत् प्रत्यक्षद्वारा सर्वेषामुपाधीनां ज्ञानं प्राप्स्यते इति । उपाधिनिरासार्थं सहायत्वेन अनुमानस्वीकरणं अनुचितं भवति, यस्मात् अनुमानप्रमाणं स्वयं सन्दिग्धत्वेन तिष्ठति । स्वयमसिद्धः कथं परान् साधयति ? इति कारणेन मतेऽस्मिन् कार्यकारणसम्बन्धोऽपि न भवति ।

## ६) शब्दप्रमाणविचारः :-

ननु योग्यानामथवा प्रवीणव्यक्तिनां व्यवहारात्मकः शब्दः न किं प्रमाणत्वेन स्वीक्रियते, अथवा विश्वासयोग्यपुरुषैः प्राप्तज्ञानानुसारं वयं स्वकीयं कर्म न निर्वक्ष्यामहे ? सत्येवं कथं शब्दे प्रमाणता नास्तीति चेत् – उच्यते । विश्वासयोग्यव्यक्तीनां ज्ञानं शब्दत्वेन मिलति । एवमेव श्रवणेन्द्रियेण प्रत्यक्षीक्रियते । एवं शाब्दज्ञानं द्विविधप्रत्यक्ष-माध्यमेन मिलति । अत एव अस्य प्रामाणिकत्वं मन्यते । यदि शब्दात् वस्तुबोधो जायते यत्र प्रत्यक्षभिन्नत्वेनास्ति अर्थात् शब्दात् अप्रत्यक्षवस्तुनां बोधः न कदापि भवति । यदि भवति तर्हि दोषसहकृतेनैव भवति । एवमापादितेन शब्दप्रमाणेन प्रायः मिथ्याज्ञानप्राप्तिरेव अस्माकमुदेयात् । केचन वदन्ति वेदः विश्वासयोग्यः इति । एतन्न समीचीनम् । यतः वेदः कः? पुरोहितैः निर्मितः सन् अयं वेदः अज्ञानिनां एवं अन्धविश्वासपरायणानां जनानां सकाशात् स्वजीवननिर्वाहाय यथाकथञ्चित् उद्घुष्टः अस्ति । अतः वेदः न विश्वासयोग्यः । वेदोक्तकर्मणां लाभः केवलं पुरोहितस्यैव न त्वन्यस्य । सति चैवं को वा विश्वसिति ?

तस्मात् शब्दद्वारा प्राप्तं ज्ञानमनुमानालम्बितं भवति । अनुमाने या सन्दिग्धता सा शब्देऽपि तिष्ठति । ज्ञानप्राप्त्यर्थं शब्दोऽपि यथार्थत्वेन निर्भरत्वेन च योग्यसाधनत्वं न भजते । अनुमानं शब्दं च विश्वासायोग्यत्वात् केवलं प्रत्यक्षमेव एकमात्रं प्रमाणमिति चार्वाका-णामभिनिवेशः जागर्ति ।

## ७) सृष्टिविचारः :-

अचेतनात्मकस्य जडभूतप्रपञ्चस्य सृष्टिविषये अन्यदार्शनिक-मतानुसारं पञ्चभूतानामपेक्षा अस्ति । पञ्चभूतानां पञ्चीकरणेनैव प्रपञ्चः उत्पन्नः इत्युच्यते । चार्वाकमते तु भूतचतुष्टयानां माध्यमेनैव प्रपञ्चः उत्पद्यते । आकाशस्य अपेक्षा नास्ति । यतः आकाशः न प्रत्यक्षीक्रियते । अतः आकाशस्य अस्तित्वं न मनुते चार्वाकः ।

आकाशस्य ज्ञानमनुमानेन भवति, न तु प्रत्यक्षेण । भूतचतुष्टयेभ्यः केवलं निर्जीवपदार्थानामेव उत्पत्तिर्न भवति, किन्तु उद्भिदादि सजीवद्रव्याणामपि उत्पत्तिः भवति । प्राणिनां जन्म भूतचतुष्टयात् संयोगात् जायते । मरणानन्तरं एते प्राणिनः पुनश्च तत्वेषु भूतचतुष्टयेषु लयं प्राप्नुवन्ति ।

## ८) आत्मस्वरूपविचारः :-

चार्वाकमतानुसारं प्रत्यक्षं द्विविधं बाह्यमानसभेदेन । मानसप्रत्यक्षद्वारा आन्तरिकभावानां ज्ञानप्राप्तिः सिध्यति । बाह्यप्रत्यक्षेण प्रपञ्चस्य साक्षात्कारः । आन्तरिकभावानां ज्ञानेन चैतन्यस्यापि प्रत्यक्षत्वं सिद्धम् । अयं चेतनः बाह्यजडद्रव्यज्ञानेन न ज्ञातो भवति। तथा च शरीरान्तर्गतत्वेन वर्तमाना अभौतिकसत्ता या तस्या एव आत्मा इति संज्ञा, परन्तु यस्य गुणः चैतन्यत्वेन अस्ति स इति न मन्तव्यम्। यतः चैतन्यस्य ज्ञानं प्रत्यक्षाद्वारा एव भवति, अथापि एतन्न वक्तव्यम् यत् चैतन्यं अभौतिकत्वं सत् आत्मगुणत्वेनास्ति इति । आत्मा तु न कदापि प्रत्यक्षीक्रियते । जडतत्वनिर्मितं यच्छरीरं तदेव प्रत्यक्षायोग्यं भवति । चैतन्यं तु शरीरान्तर्गतं भवति । अतः चैतन्यं शरीरगुणत्वेन स्वीक्रियते । चेतनात्मकशरीरस्यैव आत्मा इति कथनं युक्तियुक्तं भवति। तथा च चैतन्यविशिष्टो देह एव आत्मा इति सिद्धम् । शरीरात्मनोः तादात्म्यानुभवः दैहिकानुभवमाध्यमेनैव भवति । यथा – अहं स्थूलः, कृशः, काणः इत्यादिना । यदि शरीरचैतन्ययोः भेदः उच्यते तर्हि स्थूलकृशादीनां व्यवहाराणां व्याघातः स्यात् । आत्मा शरीरत्वेनैव प्रत्यक्षीक्रियते । अतः शरीरमेव आत्मा भवितुमर्हति । शरीरभिन्नत्वेन आत्मनः अस्तित्वमेव नास्ति इति हेतोः मरणानन्तरं सः अमरः नित्यः इति प्रश्न एव नोदेति । मरणानन्तरं शरीरं नष्टं भवति । शरीरनाशादेव तस्य जीवनस्यापि अन्तवत्त्व सिध्यति । तस्मात् इतरशास्त्रकाराणां रीत्या अस्माकं मते पुनर्जीवनं, भविष्यजीवनं, पुनर्जन्म, स्वर्गः, नरकः, कर्मयोगादि उपासनात्मकं न सङ्गच्छन्ते । शरीरभिन्नत्वेन

आत्मा अस्ति चेत् तदानीमात्मविषयिकी चिन्ता भवितुं शक्यते। तस्मात् मतेऽस्मिन् देहः एव आत्मा इति सिद्धान्तः उपस्थाप्यते।

## ९) ईश्वरास्तित्वविचारः :-

आत्मवत् ईश्वरास्तित्वेऽपि चार्वाकाणां विश्वासो नास्ति, यतः ईश्वरोऽपि न प्रत्यक्षीक्रियते। अर्थात् चाक्षुषाप्रत्यक्षायोग्यत्वेन ईश्वरः अस्तीति कृत्वा तस्यास्तित्वे प्रमाणं नास्ति। अन्यमते जगत्कर्ता ईश्वरः इत्युच्यते। अस्माकं मते जड़तत्वानां सम्मिश्रणेन संसारात्मकस्य प्रपञ्चस्योत्पत्तिः भवति। अतः जगत्कर्तृत्वेन तस्य अभ्युपगमापेक्षा नास्ति।

अत्रायं प्रश्नः उदेति—चार्वाकमतानुसारं वाय्वादिभूतचतुष्टय-मस्ति। इमानि भूतानि सृष्टिङ्गतस्य संसारस्य उपादानकारणानि भवन्ति। उपादानकारणव्यतिरिक्तत्वेन निमित्तकारणस्यापेक्षा अस्ति। यथा घटस्य कुलालवत् प्रपञ्चस्य निमित्तकारणत्वेन ईश्वरः एव भवितुमर्हति। स तु ईश्वरः उपादानकारणं स्वीकृत्य विचित्रमिमं संसारं सृजति इति चेत्—न। अस्माकं मते जडतत्वानां मध्ये तत्तत्त्वविशिष्टत्वेन स्वस्वभावः वरीवर्ति। स्वस्वस्वभावानुसारमेव इमानि तत्वानि संयुक्तानि भवन्ति। तत्त्वानां स्वतःसम्मिश्रणादेव संसारस्योत्पत्तिः इति वक्ष्यमाणत्वात् प्रपञ्चस्य सृष्ट्यर्थं ईश्वरस्य आवश्यकता नास्ति। अस्य जगतः सृष्टिः कस्यापि उद्देशस्य पूरणाय भविष्यति इति वक्तुं न किमपि प्रमाणमस्ति। प्रपञ्चस्योत्पत्तिः जडतत्त्वानामाकस्मिकसंयोगात् भवति इत्यत्र अधिकाः युक्तयः साङ्गत्येन तिष्ठन्ति। अतः अस्मिन् मते ईश्वरस्य अस्तित्वं नाङ्गीक्रियते इत्यस्माद्धतोः चार्वाकाः भवन्ति अनीश्वरवादिनः।

## १०) तत्त्वविचारः -

विश्वेऽस्मिन् वर्तमानानां मूलतत्त्वानां सम्बन्धे चार्वाकाणां मतं तेषां प्रमाणसम्बन्धिविचाराऽवलम्बितं भवति। यतो हि

प्रत्यक्षमेकमात्रं प्रमाणमस्ति एतेषाम् । अतः यद्वस्तु प्रत्यक्षप्रमाणेन सिध्यति तस्यैव वस्तुनः अस्तित्वमभ्युपगम्यते । तस्मादेव आत्मा, ईश्वरः, स्वर्गः, जीवस्य नित्यत्वं, अदृष्टादिविषयादि मान्यता अस्माकं शास्त्रात् न मिलति, एतेषां विषयाणां ज्ञानं प्रत्यक्षेण न भवति । परिशेषात् अस्माकं केवलजडद्रव्याणामेव प्रत्यक्षं भवति । अतः तानि तत्वान्येव सत्यत्वेन अभ्युपगन्तुं योग्यानि सन्ति । एवमस्मिन् मते जडवादस्य प्रतिपादनं क्रियते । अस्य मतानुसारं जडवस्तु एव एकमात्रं तत्त्वं भवति । इतरदार्शनिकानुसारं यानि भवन्ति अन्यानि तत्त्वानि, तेषां तत्त्वानामुल्लेखः एतेषां ग्रन्थे न मिलिष्यति, नाङ्गीक्रियते च इति तत्त्वविचारः ।

## ११) चार्वाकाभिप्रेतः मोक्षविचारः -

एतेषां मते स्वर्गनरकादिकल्पना मिथ्याभूता भवति । मीमांसकादयः भणन्ति– मानवजीवनस्य परमलक्ष्यत्वेन सन्ति स्वर्गादयः पुण्यलोकाः । स्वर्गादिषु महानानन्दः मिलिष्यति । इह लोके कृतवैदिककर्मानुष्ठानेन परलोके स्वर्गादिसुखात्मकं फलमनुभवति मनुष्यः इति । अस्योत्तरत्वेन चार्वाकाः वदन्ति –परलोकस्वर्गसुखादयः केवलं विश्वासमवलम्बिताः सन्ति । परलोक एव अस्तीति प्रत्यक्षयितुं प्रमाणमेव नास्ति । बुद्धिमान् पुरुषः एतत्सर्वं विचार्य पुरोहितवाक्ये विश्वासं न विदधति ।

नैयायिकादयः वर्णयन्ति–"आत्यन्तिकदुःखनाशात् मोक्षः" इति, केचन जन्मकारणनाशात् मरणानन्तरं मुक्तिरिति, अपरे अस्मिन्नेव जन्मनि मुक्तिफलमश्नुते इति स्वस्वमतमुपक्षिपन्ति । परन्तु एतेषां सर्वेषां प्रत्युत्तरत्वेन चार्वाकस्य कथनं भवति— "मरणमेव अपवर्गः" इति । यतः आत्मा इति सत्तात्मक वस्तु एव नास्ति । अतः शारीरककर्मबन्धनात् आत्मनः मुक्तिः इत्येव न सिध्यति । मोक्षस्यार्थः अयमपि भवितुं न शक्यते – जीवनकाले एव दुःखानामात्यन्तिकत्वमिति । अत्र कारणमेतद् भवति शरीरधारणादेव सुखदुःखयोः मध्ये अविच्छेद्यसम्बन्धः तिष्ठति । यदि दुःखस्य न्यूनता भवति तर्हि सुखस्याधिक्यं

भवति, किन्तु दुःखस्य पूर्णविनाशः शरीरत्यागात् अर्थात् मरणादेव भवति - जीवितकाले अधिकाधिकेन कियत्पर्यन्तं सुखमवाप्तुं शक्यते, एवं स्वजीवने दुःखानां न्यूनीकरणं कर्तुं शक्यते इति सर्वदा विविच्य बुद्धिमता पुरुषेण स्वजीवनं सुखमयं कर्तुं प्रयत्नः कार्यः। मरणानन्तरं किमपि नास्तीत्युक्तेः मरणात्पूर्वं यदनुभूत सुखं तदेव आनन्दात्मकं भवति, न त्वन्यत्। एतेषामुक्तिरस्ति - "ऋणं कृत्वा घृतं पिब" इति। अत एव चार्वाकाः सुखवादिनः इति कथ्यन्ते। सुखवादानुसारं जीवन-सुखभोगः एव जीवनस्य अन्तिमं लक्ष्यभूतं भवति। वदन्ति च एते चार्वाका.—

न स्वर्गो नापवर्गो वा नैवात्मा पारलौकिकः।
नैव वर्णाश्रमादीनां क्रियाश्च फलदायिकाः॥
अग्निहोत्रं त्रयोवेदास्त्रिदण्डं भस्मगुण्ठनम्।
बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः॥
त्रयो वेदस्य कर्तारो भण्डधूर्तनिशाचराः।
जर्भरी तुर्फरीत्यादि पण्डितानां वच.स्मृतम्॥ इति।

अपिच आस्तिकदर्शनमतानुसारं धर्मार्थकाममोक्षाख्यानि सन्ति। किन्तु चार्वाकमते कामार्थौ द्वावेव भवतः। धर्ममोक्षौ न स्वीक्रियेते चार्वाकेण। यतः मोक्षस्यार्थः— पूर्णदुःखविनाशः, अयं दुःखविनाशः मरणात्पूर्वं न सिध्यति। कोऽपि बुद्धिमान् पुरुषः स्वमृत्युं न कामयते। धर्मस्य कृते शास्त्रं प्रमाणम्, एतत् शास्त्रं न विश्वासयोग्यं भवति। अतः धर्ममोक्षौ न पुरुषार्थौ। अवशिष्टौ मध्यस्थौ द्वौ पुरुषार्थौ भवतः। यतः बुद्धिजीवी कामभोगात्मकसुखलाभाय धनस्यार्जनं करोति। अतः धनकामयोर्मध्ये काम एव अन्तिमलक्ष्यत्वेन स्वीक्रियते। अर्थात्मकं धन तु कामप्राप्त्यर्थमेकं साधनं भवति इति चार्वाकस्य मोक्षविचारः॥



******************
* अष्टमोऽध्यायः - जैनदर्शनम् *
*
******************

## ८-१) जैनदर्शनम् :-

जैनानां कथनानुसारं जिनमतप्रवर्तकत्वेन चतुर्विंशतिर्तीर्थङ्कराः सन्ति। अतिप्राचीनकालादारभ्य एतेषां तीर्थङ्कराणां परम्परा आसीत् इति निश्चीयते। अस्याः परम्परायाः प्रथमतीर्थङ्करत्वेन ऋषभदेवः आसीत्। वर्धमानः अथवा महावीरनामकत्वेन प्रसिद्धः तीर्थङ्करः अन्तिमः चतुर्विंशतितमः भवति। अस्य जन्म अस्ति क्रिस्तपूर्वषट्-शताब्द्याम्। तीर्थङ्करस्य जिनः इत्यपरं नाम। जिनशब्दार्थः भवति- विजेता अथवा जिजीषुः इति। तीर्थङ्कराः एते रागद्वेषादीन् जित्वा निर्वाणात्मकं मोक्षं प्राप्नुवन्ति इत्यस्मात् कारणात् एतेषां जिन इत्यपरं नाम भवति।

## २) जैनदर्शनपरिचयः :-

जैनदर्शने प्रत्यक्षानुमानशब्दाः प्रमाणत्वेन स्वीक्रियन्ते। यतः एतैः प्रमाणैः यथार्थज्ञानं मिलिष्यति। अनुमानं यावत्पर्यन्तं विज्ञान-नियमानुसारं भवति तावत्पर्यन्त तदनुमानेन यथार्थज्ञानमुदेति। विश्वासयोग्यपुरुषाणां यथावाक्यं श्रूयते यदा तदा तत् शब्दप्रमाणमपि सत्यं भवति। जैनमतानुसारं आध्यात्मिकविषयाणां यथार्थज्ञानं सर्वज्ञानां तीर्थङ्कराणां उपदेशे अर्थात् शब्दप्रमाणेनैव मिलिष्यति। अतः प्रमाण-त्रयमाधारीकृत्यैव जैनदर्शनं तिष्ठति। प्रत्यक्षप्रमाणद्वारा भौतिकद्रव्याणां ज्ञानं सिध्यति। चार्वाकमतानुसारं जैनदर्शनेऽपि भूतचतुष्टयानां मिश्रणेनैव भौतिकद्रव्यस्योत्पत्तिरिति अभ्युपगम्यते। भूतचतुष्टयातिरिक्त-

त्वेन आकाशकालधर्माधर्माणां ज्ञानमनुमानेन प्राप्नुवन्ति जैनाः। एतेषां मतानुसारं भौतिकद्रव्याणां स्थित्यर्थमाकाशस्य अस्तित्वमङ्गीकृतम्। द्रव्येषु अवस्थात्मकं परिवर्तनं कालेनैव भवति। गतिस्थित्यर्थं क्रमशः धर्माधर्मौ कारणीभूतौ भवतः। अत्र धर्माधर्मौ सामान्यार्थवत्त्वेन न स्वीकर्तव्यौ, किन्तु गतिस्थित्यर्थवाचकौ इति अभ्युपेयते। मतेऽस्मिन् भौतिकद्रव्याणां "पुद्गल" इति व्यवहारः। पञ्च पदार्थातिरिक्तत्वेन प्रत्यक्षानुमानद्वारा प्रमाणितत्वेन एकं चेतनात्मकं वस्तु अस्ति, तदेव जीवः इत्युच्यते। सुखदुःखाद्यनेकानां आत्मगुणानामनुभवेन जीवात्मनः प्रत्यक्षज्ञानं भवति। चैतन्योत्पत्तिः जडपदार्थेभ्यः न भवति। दर्शनेऽस्मिन् आत्मनः अस्तित्वं अनेन साध्यते यत् यदि न भवति चेतना शक्तिः तर्हि भूतचतुष्टयमिश्रणेन सजीवशरीरस्योत्पत्तिरेव न स्यात्, एवं जीवस्य परिचालनेन शरीरान्तर्गतानामिन्द्रियाणां नियमितं कार्यं न भवेत्। यतः मरणानन्तरं शरीरस्य गतिर्न दृश्यते। तस्मात् सजीवद्रव्यभिन्नत्वेन चेतनः आत्मा एकः तत्वतः अस्ति इति निश्चीयते। जैनमतानुसारं पशुपक्षिमनुष्यादिषु सकलेषु स्थावरजङ्गमेषु, एवं धूलिकणेषु जीवः वर्तते। परन्तु सर्वेषु स्थावरजङ्गमेषु समानत्वेन चेतनः नास्ति। वनस्पत्यादिषु वर्तमानः जीवः एकेन्द्रियत्वेन तिष्ठति, तेषां केवलं स्पर्शेन्द्रियमस्तीत्यतः स्पर्शबोधः एव जायते। निम्नश्रेणिजीवानां इन्द्रियद्वयं तिष्ठति। एवमन्येषां क्रमशः त्रीणि इन्द्रियाणि,इन्द्रियचतुष्टयं भवति। उच्चवर्गाणां मनुष्यादीनां पञ्च इन्द्रियाणि भविष्यन्ति। तेषामिन्द्रियाणां माध्यमेनैव वस्तुज्ञानप्राप्तिः। यावत्पर्यन्तमिन्द्रियाणि समुद्बुद्धानि न भवन्ति तावत्पर्यन्तं शरीरबन्धने प्रविष्टस्य जीवस्य ज्ञानं सीमितमस्ति। यदि इन्द्रियद्वारा आत्मशक्तिरवगुण्ठिता भवति तदा सः जीवः बहुविधात्मकैः दुःखैः आक्रान्तो भविष्यति इत्येषां नयः।

प्रत्येकस्मिन् जीवे स्वाभाविकत्वेन दर्शनज्ञानवीर्यसुखादयः अनन्ताः भवन्ति। अनन्तगुणत्वेन वर्तमानस्य जीवस्य स्वरूपं पुद्गलेन आच्छाद्यते। अर्थात् पुद्गलयोगेन जीवस्य बन्धनं इति निश्चीयते। कर्मनाशेन जीवस्य बन्धनात् मुक्तिर्भवति, बन्धनस्याभावे सः जीवः

स्वस्वाभाविकगुणेषु एकतां प्राप्नोति । तीर्थङ्कराणां उपदेशात्मक-शब्दप्रमाणेन मोक्षप्राप्तिः जायते । एते तीर्थङ्कराः मोक्षप्राप्त्यर्थं मार्गदर्शनं करिष्यन्ति । बन्धनात् मुक्तिसम्पादनाय आवश्यकत्वेन मार्गत्रयं तिष्ठति । यथा – प्रथमोपायः सम्यग्दर्शनात्मकः, महात्मना-मुपदेशं प्रति श्रद्धायाः स्थिरीकरणम् । द्वितीयः भवति—तेषामुपदेशानां यथार्थबोधेन सम्यग्ज्ञानसम्पादनम् । तृतीयः अस्ति— सच्चरित्रता, इयं भवति नैतिकनियमानामनुकूलाचरणात्मिका । अर्थात् स्वजीवने अहिंसा, सत्य, अस्तेय, ब्रह्मचर्य, अपरिग्रहानां सम्यक् परिपालनं भवति सच्चरित्रता । सम्यग्दर्शनज्ञानशास्त्राणां सम्मिलितप्रयोगेण वासनानां नियन्त्रण भवति, अनेन नियन्त्रणेन कर्मनाशः, कर्मनाशात् जीवस्य मुक्तिः । यतः पुद्गलादेव जीवः कर्मणि नियुक्तः अस्ति । कर्माभावेन पुद्गलोऽपि स्वयमेव निवर्तते । अतः प्रथमतया बन्धनत्वेन हेतुतया वर्तमानस्य पुद्गलस्य नाशाय प्रयत्नः कार्यः सर्वैः जीवैः । पुद्गलनाशेन जीवस्य अनन्तचतुष्टयं मिलिष्यति । अर्थात् सः जीवः अनन्तदर्शनज्ञान-शक्ति-आनन्देभ्यः प्रस्फुटितो भवति । इयमेव दशा मोक्षावस्था । जैनाः ईश्वरं न मन्यन्ते । ईश्वरस्थाने तीर्थकराणां निवेशो भवति । यतः एतेषां नये तीर्थङ्कर एव ईश्वरवत् सर्वज्ञः एवं सर्वशक्तिमान् भवति । एतेषा-मनुयायिनः तीर्थङ्करान् एव आदर्शस्वरूपत्वेन मन्यन्ते । एवमेतेषां दर्शनस्य सामान्यपरिचयः ।

## ३) प्रमाणविचारः :-

ज्ञानं द्विप्रकारकम् – एकमपरोक्षम् अन्यत् परोक्षं चेति । यद् ज्ञान साधारणतया अपरोक्षत्वं भजते तत् केवलमपेक्षाकृतमपरोक्षज्ञान-मित्युच्यते । इन्द्रियैः मनसा च यत् ब्राह्याभ्यन्तरविषयाणां ज्ञानं भवति तत् अनुमानापेक्षया अवश्यापरोक्षात्मकं भवति, किन्तु एतादृशज्ञानानां पूर्णतया अपरोक्षत्वं न मन्यते । यतः एतद् ज्ञानं इन्द्रियैः मनसा च सम्पत्स्यते । व्यावहारिकज्ञानातिरिक्तत्वेन पारमार्थिकापरोक्षज्ञानमपि भवितुमर्हति । पारमार्थिकज्ञानप्राप्तिस्तु कर्मबन्धननाशानन्तरं भवति ।

पारमार्थिकापरोक्षज्ञाने आत्मनः एवं ज्ञेयवस्तूनां इन्द्रियादिसहायतां विना साक्षात् सम्बन्धस्तिष्ठति । यावत्पर्यन्तं कर्मजनितबाधानुभवः अनुभूयते तावत् एतदपरोक्षज्ञानं नोदेति । अर्थात् पुद्गलनाशानन्तरमेतद् पारमार्थिकं ज्ञानं देदीप्यते ।

एतद् पारमार्थिकापरोक्षज्ञानं त्रिधा भज्यते-अवधिभूतं, मनःपर्यायात्मकं, केवलं चेति । तत्र अवधिज्ञानं तु यदा मनुष्यः अंशतः स्वकर्मणः नष्टतां सम्पादयति तदा तस्मिन् एका शक्तिरुदेति । अनन्तरं तया शक्त्या स पुरुषः अत्यन्तकूटस्थं सूक्ष्ममात्मानं एवं अस्पष्टद्रव्याणां स्वरूपं ज्ञातुं समर्थो भवति । अनेन सीमितवस्तूनां ज्ञानं प्राप्यते इत्यतः अस्य ज्ञानस्य परिधिज्ञानमिति संज्ञा । द्वितीयं भवति – यदा मनुष्यः रागद्वेषादिमानसिकबाधानां जेता भवति तदा अन्यव्यक्तिषु वर्त्तमानं ज्ञानमेवं भूतानां विचारात्मकं ज्ञानं प्राप्नोति । अन्येषां मनसि प्रवेशं करोति इत्यतः एतद् ज्ञानं मनः पर्यायत्वेनोच्यते । यदा ज्ञानबाधकत्वेन वर्त्तमानानि यानि सर्वाणि कर्माणि तानि आत्मनः सकाशात् सम्पूर्णतया नष्टानि भवन्ति तदा अनन्तज्ञानप्राप्तिर्जायते । अस्यैव ज्ञानस्य केवलज्ञानमिति व्यवहारः ।

जैनदर्शनानुसारं मतिज्ञानम् श्रुतज्ञानम् इति ज्ञानद्वयम् । मतिज्ञानं नाम इन्द्रियेभ्यः एवं मनसः प्राप्तं यद् ज्ञानं तद् भवति । श्रुतज्ञानं भवति शब्दज्ञानम् । एतेषु ज्ञानपञ्चकेषु मतिज्ञान–श्रुतज्ञानावधिज्ञानेषु दोषस्य सम्भावना वर्त्तते । किन्तु मनःपर्यायज्ञानं केवलज्ञानमिति द्वयं सर्वथा दोषरहितत्वेन तिष्ठति । साधारणतः दर्शनेऽस्मिन् अन्यदर्शनानुसारं प्रत्यक्षानुमानशब्दाः प्रमाणत्वेन त्रीणि स्वीक्रियन्ते ।

## ४) स्याद्वादविचारः :-

जैननये एकपरामर्शवस्तुना एकस्यैव धर्मस्य बोधः जायते । वस्तुनि भिन्नविभिन्नप्रकारेण प्रत्यक्षपरोक्षात्मकानि ज्ञानानि उत्पद्यन्ते । अनेन एतत्स्पष्टं भवति यत् वस्तुनि अनेकधर्माः तिष्ठन्ति । अतः

एतेषां कथनं भवति अनन्तधर्मकं वस्तु इति। केवलज्ञानद्वारा वस्तूनामनेके धर्माः प्रत्यक्षीक्रियन्ते। अपितु साधारणजनस्य एकस्मिन् समये वस्तुनि एका दृष्टिः भवितुं शक्यते। अत एव सः तस्मिन् वस्तुनि एकमेव धर्मं जानाति। वस्तुनः अस्यांशिकस्य नयः इत्युच्यते। नयति प्रापयति सम्वेदनम् आरोहयतीति नयः, प्रमाणप्रवृत्तेः उत्तरकालभावी परामर्शः भवति। विभिन्नदर्शनेषु भिन्नभिन्नत्वेन संसारस्य वर्णनं लभ्यते। अत्र कारणमेतदस्ति सर्वेषु एकाः दृष्टिः नास्ति। अतः भिन्नभिन्नदार्शनिकमतानुसारं स्वदृष्टिरेव सत्यरूपा भवति। तस्मादेव जैनानां आग्रहः वर्तते यत् प्रत्येकनयारम्भे "स्यात्" इति शब्दस्य प्रयोगः कर्तव्यः इति। स्यादितिशब्देन एतत् सङ्केतितं भवति तस्य साकं प्रयुक्तवाक्यस्य प्रसङ्गविशेषे सत्यत्वं निर्भरत्वेन अस्तीति। अन्यप्रसङ्गे तद् वाक्यं मिथ्याभूतमित्यपि भवेत्। तथा च विचारं दोषमुक्तत्वेन कर्तुं स्यादिति प्रयोगः अत्यन्तावश्यकः। यथा - पटं दृष्ट्वा स्यात् पटः अस्ति इति व्यवहारः। स्यादिति पदस्य ज्ञानं भवति पटस्य अस्तित्वं कालविशेषेण, एवं गुणविशेषेण च अनुसरतीति। अपिच स्यादिति पदेन न कदापि भ्रमस्योत्पत्तिः भवति, यतः पटः नित्यत्वेन सर्वव्यापित्वेन च अस्ति। पटः इति वाक्येन अनेकप्रकाराणां भ्रान्तिज्ञानानामुदयः भवति।

अयं वादः जैनमते "स्याद्वादः" इति प्रथां प्राप्नोति। साधारणबुद्धिमान् मनुष्यः कस्मिन्नपि वस्तुनि परामर्शत्वेन किमपि करोति तत् कर्म तस्मिन् वस्तुनि एकदेशत्वेन तिष्ठति। अर्थात् तस्य परामर्शस्य सत्यत्वं तत्प्रसङ्गानुसारं भवति, यस्य वस्तुनः कल्पना तस्मिन् पुरुषे सदा तिष्ठति इति स्याद्वादस्य सारभूतो अर्थः भवति।

## ५) सप्तभङ्गीनयविचारः :-

सप्तभङ्गीनयः एवं भवति- (१) स्यात् अस्ति,(२) स्यात् नास्ति (३) स्यात् अस्ति च नास्ति च (४) स्यात् अवक्तव्यम् (५) स्यात् अस्ति च अवक्तव्यं च (६) स्यात् नास्ति च अवक्तव्यं च (७) स्यात् अस्ति च नास्ति च अवक्तव्यंच इति। जैनशास्त्रे परामर्शस्यापि नयः इत्युच्यते।

जैनतार्किकः प्रत्येकनयेन सह स्यात् इति पदं योजयति। स्यात् घटः अस्ति इत्यत्र स्यादिति पदेन घटस्य स्थान-काल-वर्णादीनां सङ्केतो भवति। एतन्मतानुसारं अस्तीति बोधकपरामर्शस्य सामान्यरूपं भवति स्यात् अस्तीति। एवं घटसम्बन्धे नास्तिबोधकपरामर्शः स्यात् नास्ति वाक्यात् लभ्यते। उदाहरणं भवति - स्यात् घटः न श्यामवर्णः इति। अर्थात् कोऽपि एकः विशेषः घटः विशेषस्थानादिपरिस्थितौ न श्यामवर्णः इति। अतः नास्तिबोधकपरामर्शेऽपि स्यादिति शब्दस्य प्रयोगः अत्यावश्यकः इति द्वितीयपरामर्शस्य सामान्यरूपं भवति - स्यात् नास्तीति। तृतीयः परामर्शः - स्यात् अस्ति च नास्ति चेति। एकदा घटः रक्तत्वं भजते, तथा अन्यस्मिन् समये अन्येन वर्णेनापि स्यातुं प्रभवति। अस्य घटस्य व्यक्ततासम्पादनाय संयुक्तपरामर्शस्य अपेक्षा अस्ति। घटस्य सामान्यरूपं स्यात् अस्ति च नास्ति च इत्युच्यते। अनेन एकस्मिन् वस्तुनि एकस्मिन्नेव समये अस्तित्वनास्तित्वसम्बन्धेन बोधः जायते। विभिन्नदृष्ट्या विचारकरणार्थमुक्तः तृतीयभेदः आवश्यकः। चतुर्थः अस्ति - स्यात् अवक्तव्यः इति। सर्वसमयेषु एवं सर्वावस्थासु च घटस्य वर्णः कीदृशः? इति प्रश्नस्योत्तरत्वेन इदमुच्यते, अनया दृष्ट्या घटस्य वर्णसम्बन्धविषये किमपि वक्तुं न शक्यते। यस्मिन् परामर्शे परस्परविरोधिगुणानां सम्बन्धः युगपत यदि विचारः कार्यः तदा तस्य यथार्थरूपं स्यात् अवक्तव्यम् इति भविष्यति। पञ्चमः परामर्शः - स्यात् अस्ति च अवक्तव्यं च इति। अर्थात् स्यात् अपि अस्ति अवक्तव्य चास्ति इति। कयापि विशेषदृष्ट्या अस्माभिः रक्तवर्णः घटः इति वक्तुं शक्यते। किन्तु यदा दृष्टेः स्पष्टनिर्देशो न भवति तर्हि घटमध्ये स्थितस्य वर्णस्य वर्णनकरणं न सम्भवति। अतः व्यापकदृष्टचा घटः रक्तः एवमवक्तव्यं च भवति इति पञ्चमः। षष्ठः परामर्शः भवति - स्यात नास्ति च अवक्तव्यं चेति। अयं भवति - द्वितीयचतुर्थयोः मेलनेन। अस्य प्रकारोऽपि तथैव भवति। अतः पुनः वक्तव्यस्यापेक्षा नास्ति। सप्तमस्तु परामर्शप्रकारः - स्यात् अस्ति च नास्ति च अवक्तव्यं चेति भवति। अयं परामर्शः तृतीय-चतुर्थपरामर्शमेलनेन सम्पत्स्यते।

तत्र यथोक्ताः दृष्टान्तादयः अत्रापि भविष्यन्ति। षष्ठ-सप्तमौ परामर्शौ द्वाभ्यां मेलनेन सिध्यतः इति कारणात् द्वावपि पृथक्कथितौ इति विवेचनीयम्।

६) द्रव्यविचारः :-

यस्मिन् धर्मः वर्तते स एव धर्मी इत्यभिधीयते, एवं धर्मिमध्ये वर्तमानलक्षणस्य धर्म इत्युच्यते। धर्मिणः एव अपरं नाम द्रव्यमिति। प्रत्येकस्मिन् द्रव्ये प्रकारद्वयधर्मौ तिष्ठतः - स्वरूपधर्मः एवमागन्तुकधर्मः इति। इमौ नित्यपरिवर्तनशीलत्वेन भण्येते। स्वरूपधर्मः अयं भवति-द्रव्ये सर्वदा वर्तमानः यः सः इति। एतादृशधर्मं विहाय द्रव्यस्य अस्तित्वमेव न सम्भवति। उदाहरणेन – चैतन्यमात्मनः स्वरूपमिति। अत्रात्मनि स्वरूपधर्मत्वेन चैतन्यं स्वीक्रियते। चैतन्यस्याभावे आत्मा नास्ति इत्यतः तेन चैतन्येन आत्मनः नित्यत्वमपि प्रसाधितम्। आगन्तुकधर्मस्तु - वस्तुनि न सर्वदा तिष्ठति। एते धर्माः वस्तुनि आगमिष्यन्ति गमिष्यन्ति च। इच्छासङ्कल्पसुखदुःखादयः आत्मनः परिवर्तनशीलधर्माः भवन्ति। एतैः धर्मैः द्रव्यस्यापि परिवर्तनं भवति। जैनदर्शने स्वरूपधर्मस्य गुणः इति व्यवहारः एवमागन्तुकस्य पर्यायः इति कथनं भवति। तथा च गुणः अपरिवर्तनशीलः, पर्यायः परिवर्तनशीलः इत्युच्यते। संक्षेपतः द्रव्यस्य परिभाषारूपेण एतदाम्नायते यत् यस्मिन् गुणः तथा पर्यायस्तिष्ठति तद् द्रव्यमिति। अय संसारः विभिन्नद्रव्याणां संयोगेन जायते। जैनास्तु अस्य संसारस्य एकदृष्ट्या अनित्यत्वं प्रतिपादयन्ति। यथार्थतः नित्यपरिवर्तनधर्मौ सत्स्वरूपौ। अतः संसारः नित्यः परिवर्तनशीलश्च इति वक्तव्ये नास्ति दोषः। स्याद्वादकारणेन एकमुखेन संसारस्य नित्यता,अन्यमुखेन तस्यैव परिवर्तनशीलता इत्यदोषः। द्रव्यं सत् भवति। "उत्पत्तिव्ययध्रौव्यलक्षणं सत्" इति कथनेन प्रत्येकस्मिन् द्रव्ये उत्पत्तिः, क्षयः, नित्यता इति लक्षणत्रयं तिष्ठति। स्वगुणकारणवशेन द्रव्यं नित्यं भवति, यतः गुणाः न परिवर्तन्ते। परिवर्तनशीलपदार्थानां उत्पत्तिः तथा अन्तवत्त्वं च भवतः इति हेतोः

तेषु द्रव्येषु उत्पत्तिः एवं विनाशश्च तिष्ठतः। एवं द्रव्यसत्ताविचारः।

### ७) द्रव्यभेदविचारः :-

समस्तद्रव्याणि भागद्वयेन विभजति जैनाचर्याः - एकः अस्तिकायः अपरः अनस्तिकायः इति। कालः अनस्तिकायद्रव्यत्वेन स्वीक्रियते। अवशिष्टानि सर्वाणि आकाशादीनि द्रव्याणि अस्तिकायत्वेन भण्यन्ते। एतेषां द्रव्याणामस्तिकायत्वमनेन कारणेनोच्यते - इमानि द्रव्याणि सन्ति एवं कायत्वेन भान्ति इति अस्तिकायकथनमेतेषाम्। अस्तिकायः द्विप्रकारात्मकः— जीवाजीवभेदेन। आत्मनः अन्यत् नाम जीवः इति। जीवः द्विप्रकारः— मुक्तबद्धभेदेन। मुक्ताः भवन्ति बन्धनात् मुक्ति प्राप्य ये मोक्षं प्राप्तवन्तस्ते। इदानीं यावत् संसारे बद्धत्वेन तिष्ठन्ति ये ते जीवाः बद्धाः इति परिगण्यन्ते। बद्धजीवेष्वपि भेदद्वयं वर्तते - त्रसस्थावरभेदेन। त्रसजीवाः गतिमन्तः सन्ति, स्थावराः गतिहीनत्वेन स्थास्यन्ति। स्थावरजीवशरीरमपूर्ण भवति। स्थावरजीवाः पृथिव्यप्तेजीवाय्व्यात्मकेन वनस्तिरूपशरीरेषु तिष्ठन्ति। स्थावरजीवाः स्पर्शेन्द्रियमात्रग्राह्याः तिष्ठन्ति। त्रसजीवेषु न्यूनाधिकः विकासः उपलभ्यते। त्रसजीवाः क्रमशः द्विःत्रिचतुःपञ्चेन्द्रियात्मकाः भविष्यन्ति। सर्पादीनां त्वक् जिह्वा इति इन्द्रियद्वयम्, पिपीलिकादीनां त्वक् जिह्वा नासिका इति त्रीणि इन्द्रियाणि, मत्स्य भ्रमरादीनां - त्वक् जिह्वा, नासिका, चक्षुरिति इद्रियचतुष्टयम्, पशुपक्षिमनुष्यादीनां पञ्च इन्द्रियाणि- त्वक् जिह्वा नासिका चक्षुः श्रोत्रमिति भवन्ति। अस्तिकायः अजीवभेदेन चतुर्धा भिद्यते - धर्मः, अधर्मः, आकाशः, पुद्गलः इति एवं द्रव्यभेदविचारः।

### ८) पुद्गलादिविचारः :-

जडद्रव्यं पुद्गलः इत्युच्यते। यस्मिन् द्रव्ये संयोगविभागौ भवतः तस्य पुद्गलः इति नाम्ना व्यवहारः। जडद्रव्याणां मध्ये संयोगः भवति एव विभागोऽपि जायते। पुद्गलस्य अतिसूक्ष्मभावः अणुः इत्युच्यते। अणुद्वयाधिकसंयोगेन संघातः अथवा स्कन्धः उत्पद्यते।

अस्मादृशानां शरीरं अन्यजडद्रव्याणुसंयोगात्मकसंघातेन निर्मितं भवति। मनः प्राणादयः जडतत्त्वेनैव निर्मिताः सन्ति। पुद्गले गुणचतुष्टयं तिष्ठति-स्पर्शरसगन्धवर्णाः इति। एते गुणाः अणूनां मध्ये एवं संघाते च मिलिष्यन्ति। अन्यदार्शनिकमतानुसारं जैनमते शब्दः भौतिकगुणत्वेन च स्वीक्रियते। एतेषां कथनं भवति पुद्गलस्य आगन्तुकपरिवर्त्तनात्मककारणेन शब्दः उत्पद्यते इति। एवं पुद्गलविचारः।

आकाशस्य अस्तित्वकारणादेव अस्तिकायद्रव्याणां स्थानप्राप्तिरस्ति। जीवपुद्गलधर्माधर्माः आकाशे स्थास्यन्ति। आकाशस्तु न दृष्टिगोचरो भवति। अस्यास्तित्वमनुमानेन सिध्यति। द्रव्याणां क्रमिकः विस्तारः स्थानादेव भवति, द्रव्याणां स्थानत्वेन आकाशस्तिष्ठति। आकाशं विना अस्तिकायद्रव्याणां विकासः असम्भवः। द्रव्येण आकाशः व्याप्तत्वेन तिष्ठति, आकाशेन द्रव्यं संसारे व्याप्तं भवति। आकाशे भवति भेदद्वयम्-लोकाकाशः अलोकाकाशः इति। जीवानां एवं द्रव्याणां आश्रयत्वेन यः अस्ति सः लोकाकाशः। लोकाकाशपरत्वेन यः अस्ति आकाशः तस्य अलोकाकाशः इत्युच्यते इति आकाशविचारः।

अस्तिकायद्रव्यमध्ये कालस्य गणना न भवति। यतः कालः अखण्डद्रव्यत्वेन उच्यते। अखिलप्रपञ्चे एकः एव कालस्तिष्ठति। अयं कालः अवयवं विना विश्वेऽस्मिन् व्याप्तः इति स्वीक्रियते। जैनाः तत्र तत्र कालस्य भेदद्वयमङ्गीकरिष्यन्ति-पारमार्थिकव्यावहारिकत्वेन। व्यावहारिककालः समयः इत्यपि उच्यते। पारमार्थिककालः कारणं भवति वर्त्तना इति। व्यवहारिककाले अन्यान्यपरिवर्त्तनमपि कारणत्वेन तिष्ठति। यथा क्षणमुहूर्तादयः। समयस्य आरम्भः अन्तवत्त्वं च भवतः, किन्तु पारमार्थिककालः नित्यः निराकारश्च भवति। पारमार्थिककालस्य विभिन्नोपाधिद्वारा विभागकरणेन दण्डदिनमासादयः लभ्यन्ते इति कालविचारः।

धर्माधर्मो क्रमशः गति-स्थित्यर्थवाचकौ भवतः। जीवादिजडवस्तूनि गत्यर्थं सहायकद्रव्यस्य अपेक्षां करिष्यन्ति, येन कारणेन तेषां

गते: सम्भव: स्यात्। स एव गतिरूप: धर्म: इति प्रोच्यते। अधर्म: द्रव्याणां स्थिरीकरणार्थं सहायकत्वेन तिष्ठति। यथा वृक्षच्छाया श्रान्तस्य पथिकस्य विश्रामदानाय सहायकत्वेन तिष्ठति तद्वत् अधर्मोऽपि विश्रामस्थितिसहायको भवति। धर्माधर्मौ परस्परविरोधिनौ अथापि द्वयोर्मध्ये साद्दश्यं तिष्ठति। धर्म: निराकारकारणत्वेन उच्यते, अधर्म: उदासीनकारणत्वेनाभिधीयते। धर्माधर्मौ स्वयं न क्रियाशीलौ। अन्यदार्शनिकानुसारमत्र धर्माधर्मौ धार्मिकार्थत्वेन न कथितौ अपि तु विशेषपारिभाषिकार्थे प्रयुक्तौ भवत: इति धर्माधर्मयो: विचार:।

## ६) तत्त्वविचार: :-

प्रत्येकं वस्तु अनेकधर्मत्वेन तिष्ठति। एतेषां वाक्यमस्ति— "अनेकधर्मकं वस्तु" इति। प्रत्येकस्मिन् वस्तुनि धर्म: द्वि:प्रकारत्वेन तिष्ठति भावात्मकाभावात्मकरूपेण। भावात्मकधर्मस्य स्वपर्याय: इति जैना: सूचयन्ति, एवमभावात्मकस्य परपर्याय: इति। उदाहरणेन एकस्मिन् मनुष्ये आकारवर्णरूपकुलगोत्रजातिव्यवसायादय: भावात्मकधर्मा: इति कथ्यन्ते। तस्मिन्नेव पुरुषे अन्यस्मात् वस्तुन: भेदोऽपि वर्तते, अयमभावात्मकधर्मत्वेन प्रोच्यते। यदा यस्य पुरुषस्य ज्ञानं सम्यक्तया भवितव्य तदा स: पुरुष: अन्यसर्ववस्तुभ्य: भिन्नत्वेन भाव्य:। भावात्मकधर्मापेक्षया अभावात्मकधर्मा: अधिका:, यत: मनुष्यापेक्षया अन्यवस्तुभ्य: य: भेद: स एव अभावात्मकधर्मत्वेनोच्यते। यथा— मूर्खस्वार्थधूर्तादय:। कालपरिवर्तनेन धर्मस्यापि परिवर्तनं भवति, यत: कार्यक्रमानुसारं कालानुसारं च धर्मेषु परिवर्तनं द्दश्यते। परिवर्तितेषु धर्मेषु नूतना: धर्मा: उत्पत्स्यन्ते। अत: वस्तु अनन्तधर्मकं भवति। तस्मादेव पुरुषेण एकं वस्तु सम्यक्तया ज्ञातव्यम्। "एको भाव: सर्वथा येन द्दष्ट: सर्वो भाव: सर्वथा तेन द्दष्ट:" इति वाक्यानुसारं सर्वज्ञ: पुरुष: एव सर्वेषां वस्तूनां ज्ञानं सम्पादयति। अन्येषां च जीवानां कृते व्यवहारस्य वस्तूनामांशिकं ज्ञानं पर्याप्तं भवति। ज्ञानद्वारा एव वस्तुन: पूर्णज्ञानं सम्पादयितुं शक्यते इति तत्त्वविचार:।

## १०) आत्मस्वरूपविचारः :-

'चेतनालक्षणो जीवः' इति वाक्येन चेतनद्रव्यस्य कथनं भवति जीवः, अथवा आत्मा इति । विभिन्नजीवेषु चैतन्यस्य स्वरूपं, तस्य मात्रा च भिन्नभिन्नत्वेन तिष्ठति । मात्राभेदानुसारं जीवे एकं तारतम्यं भवति । तेषु तारतम्येषु सिद्धात्मानां स्थानमुत्कृष्टमस्ति । यः कर्मविजयी सः सिद्धः सन् पूर्णज्ञानी भवति । सर्वाधिकापेक्षया नीचजीवाः वर्त्तन्ते एकेन्द्रिययुक्ताः पृथिव्यप्तेज आदयः । जीवयुक्तपदार्थेषु एतेषु सर्वथा चैतन्याभावः दरीदृश्यते, वस्तुतः एतेष्वपि स्पर्शज्ञानं तिष्ठति । एतेषामपेक्षया पञ्चेन्द्रिययुक्तेषु जीवेषु चेतनः मध्यमत्वेन तिष्ठति । ज्ञानावाप्तये जीवः एवाधिकारी, स एव कर्मकर्त्ता च भवति । कर्मकरणात् सुखदुःखादीनां भोगोऽपि तस्यैव भवति । आत्मा स्वयं प्रकाशितः सन् अन्यानपि प्रकाशयति । स तु नित्यः, तस्मिन् अवस्थाः परिणमन्ते । शरीरभिन्नत्वेन वर्त्तमानस्य तस्य अस्तित्वं आत्मानुभूत्या एव प्रमाणितं भवति । अयं जीवः शरीरं सर्वत्र व्याप्य तिष्ठति ।

सञ्चितकर्मानुसारमयं जीवः चक्रनेमिक्रमेण जन्मात् जन्म इति अनेकशरीरधारणं करोति । यथा दीपः सर्वत्र प्रकाशते तथा जीवः शरीरे आकेशनखादिना प्रकाशते । जीवः न सर्वव्यापी, अस्य व्यापकत्वं शरीरमात्रं यावत् भवति । शरीरगतविषयाणामेव अपरोक्षज्ञानं सम्पादयति जीवः । चैतन्यं शरीरान्तः एव तिष्ठति न बहिः । सजीवशरीरस्य प्रत्येकावयवेषु दृश्यते चैतन्यस्य बोधः । अतः आत्मनः स्वरूपलक्षणत्वेन चैतन्यमस्तीति मत्वापि सम्पूर्णशरीरे तस्यास्तित्वाभ्युपगमः युक्तियुक्त एव भवति । शरीरान्तर्गतस्यात्मनः व्यापकत्वं नाम शरीरस्य विभिन्नभागानामनुभवेन सः साक्षात्कृतो भवतीति शरीरमात्रं तस्य व्यापकत्वम्, न तु शरीरभिन्नेषु अन्येषु द्रव्येषु तस्य व्यापकता । यस्मिन् शरीरे एकात्मा तिष्ठति तत्र अपरस्यात्मनः सन्निवेशोऽपि भवितुं शक्यते इति जनानां सिद्धान्तः । यथा एकस्मिन्नेव प्रकोष्ठे एकेन दीपेन सह अन्यस्य दीपस्य ज्ञानं भवितुं युज्यते तद्वत् । 'अहं सुखी' इत्यादि

व्यवहारमाध्यमेनापि प्रत्यक्षज्ञानेनैव आत्मनः अस्तित्वमनुभूयते । एवमेव अन्यैः दुःखस्मृत्याद्यात्मगुणैः अपि आत्मनः प्रत्यक्षानुभूतिः भवति ।

परोक्षप्रमाणेनापि आत्मनः अस्तित्वं सिध्यति । इच्छानुसारं शरीरं परिचालयति ! शरीरस्यास्य परिचालने एकस्यापेक्षा भवति स एव आत्मा इत्युच्यते । यथा रथस्य परिचालनार्थं एकस्य पुरुषात्मक-चैतन्यस्यापेक्षा अस्ति, स एव सारथिरित्युच्यते तद्वदत्रापि । ज्ञान-सम्पादनार्थं प्रत्येकमनुष्यस्य विभिन्नसाधनानि चक्षुरादीनि इन्द्रियाणि सन्ति । इन्द्रियद्वारा ज्ञानप्राप्त्यर्थं प्रयोजनकर्तुरपेक्षा अस्ति । यः कर्त्ता स एव आत्मा इति युक्त्या आत्मस्वरूपं सिध्यति । पुनश्च शरीरो-त्पत्यर्थं निमित्तकारणत्वेन स एव तिष्ठति ! यथा- घटस्य उपादान-कारणत्वेन मृत्, निमित्तकारत्वेन कुलालः इति दृष्टः एवमेव चैतन्योपादानकत्वेन शरीरे भवति यः आत्मा स एव जन्मान्तर-स्वीकरणे निमित्तत्वेन तिष्ठति । एतादृशैः युक्तिभिश्च आत्मनः अस्तित्वं सिद्धम् इति आत्मस्वरूपविवेचनम् ।

## ११) जीवस्य बन्धनविचारः :-

सामान्यतया बन्धनस्यार्थो भवति जन्मग्रहणमिति । विभिन्न-दार्शनिकमतानुसारं संसारात्मनोः सम्बध भिन्न-भिन्नाः आलोचनाः प्रस्तुताः सन्ति । विचारभेदमनुसृत्य बन्धनात्मकसम्बन्धार्थेऽपि तेषु पृथक् मतभेदोऽपि दृश्यते । जैनमतानुसारं जीवस्यैव बन्धनं, तेन दुःखभाक् भवति जीवः । जीवस्तु चेतनात्मकं द्रव्यमिति प्रागेवोक्तम् । अयं स्वभावतः पूर्णः, यथार्थतः अनन्तश्च भवति, किन्तु अस्य शरीर-धारणकरणेन अनेकाः बाधाः भोक्तव्यत्वेन पुरतः आगच्छन्ति । यदि बाधानां निरासो जायते तदा स एव अनन्तचतुष्टयं प्राप्नोति । यथा आकाशे मेघापसरणेन सूर्यः सकलपृथिवीमिमां स्वप्रकाशेन प्रकाशयति तथा बाधानां निवृत्तीकरणेन जीवः अनन्तज्ञानादि अन्यान्तर्निहित-गुणान् साक्षात्करोति ।

ननु के एते बाधाः? बाधा कथंप्रकारेण जीवगतस्वाभाविक-गुणान् आच्छादयति इति चेत् – उच्यते । शरीरादेव जोवस्य बन्धन भवति। अनेनैव कारणेन जीवगतगुणाः अभिभूताः भवन्ति। पुद्गलात् शरीरमुत्पद्यते। तथा विशेषशिल्पकलासम्पादनाय विशेषज्ञानघटितस्य शिल्पिनः अपेक्षा लोके दृष्टा एवमेव विशेषप्रकारशरीरसम्पादनाय विशेषात्मकपुद्गलस्यापेक्षा अस्ति। जीवगतप्रवृतिद्वारा शरीरस्य निर्माणं भवति, अर्थात् जीवः स्वसंस्कारवशेनैव शरीरधारणं करोति। पूर्वजन्मकर्मानुसारं अस्मिन् जन्मनि आचारविचारवचनादिवासनानि उत्पद्यन्ते। इयं वासना तु भुक्त्वा एव नश्यति। फलमेतद् भवति यत् येन विशेषप्रकारात्मकस्य शरीरस्य उत्पत्तिर्भवति तादृशं पुद्गलं शरीरं स्ववशे आनयति। अतः जीवः स्वकर्मानुसारमेव शरीरधारणं कृत्वा लोकेऽस्मिन् व्यस्तचित्तो भवति। जीवः शरीरस्य निमितकारणत्वेन तिष्ठति, अस्यैव शरीरस्य उपादानकारणत्वेन पुद्गलः अस्ति। शरीरमिति पदेन केवलं स्थूलशरीरं न ग्राह्यम, अपितु इन्द्रियमनः-प्राणाद्योऽपि स्वीकर्त्तव्याः, यतः येन कारणेन जीवगतस्वाभाविकगुणाः साक्षात्क्रियन्ते। तस्मात् जीवस्य कर्मणः एव बन्धनं भवति। सकषा-यत्वात् जीवः कर्मणो योग्यान् पुद्गलान् आदत्ते सः बन्धः इति तस्य स्वरूपम्। कर्मणः कारणत्वेन पुद्गलं तिष्ठति। अस्य नाशेन जीवस्य निर्वाणात्मिका मुक्तिर्लभ्यते।

## १२) मोक्षविचारः :-

जीव-पुद्गलयोः संयोगेन बन्धनमिति कथितम्। अतः जीवस्य पुद्गलवियोगादेव मोक्षः सिध्यति। पुद्गलस्य वियोगः तदा भवितुं शक्यते यदा नवपुद्गलः आश्रवः न स्यात्, एवं जीवे पूर्वमेव प्रविष्टष्य पुद्गलस्य जीर्णता भवितव्या। नवपुद्गलः सम्बर इति उच्यते, प्रविष्टपुद्गलः निर्जरा इति भण्यते। अज्ञानमेव कषायाणां कारणत्वेन तिष्ठति। जीवे पुद्गलाश्रवः एव जीवान्तर्निहितकषायाणां कारणं भवति। कषायाणां कारणमज्ञानमिति प्रागेवोक्तम्। अर्थात् आत्मनः

एवं अन्यद्रव्याणां यथार्थज्ञानाभावकारणादेव प्रत्येकस्मिन् जीवे मनः-क्रोधमानमायालोभादीनामुत्पत्तिः जायते । अज्ञातस्य नाशः ज्ञानादेव भविष्यति । अतः एव जैनमते सम्यग्ज्ञानस्य अथवा तत्त्वज्ञानस्यैव अधिकमहत्वं दीयते । सम्यक् ज्ञानस्य प्राप्तिस्तु तीर्थङ्कराणां मुक्तमहात्मनामुपदेशमननादेव जायते । महात्मानः स्वयं मोक्षं लब्ध्वा अन्यान् उपदिशन्ति इत्यतः तस्योपदेशः लाभदायकः । उपदेशस्य मननसमये उपदेष्टॄन् प्रति श्रद्धाभावः अत्यावश्यकः । श्रद्धायाः अस्याः सम्यक् दर्शनमिति संज्ञा । सम्यग्दर्शनमाध्यमेनैव सम्यग्ज्ञानस्य प्राप्तिर्भवति । केवलसम्यग्ज्ञानप्राप्तिरेव मोक्षस्य न फलात्मिका । सम्यग्ज्ञानानुसारं जीवनस्य पावनकारणात्मकं कर्म अत्यावश्यकम् । अतः मोक्षोपायस्य तृतीयत्वेन सम्यक्चरित्रता तिष्ठति । सम्यक्चरित्रानुसारं जीवस्य वासनेन्द्रियमनोवचनकर्मणां संयतत्वं साधयितुं शक्यते । अस्य परिणामः अयं भवति यत् नूतनधर्माणां सञ्चयः पिनद्धो भवति, एवं पुरातनानि कर्माणि नष्टानि भवन्ति । फलतः तस्य पुद्गलस्यापि नाशः सम्भवति, येन कारणेन जीवः संसारेऽस्मिन् बन्धने पतितः ।

तस्मादेव दर्शने अस्मिन् सम्यग्दर्शनम्, सम्यग्ज्ञानम् सम्यक्चरित्रम् इति त्रयाणां मोक्षहेतूनां 'त्रिरत्नानि' इति संज्ञा । इमानि त्रीणि जीवस्य अलङ्करणत्वेन तिष्ठन्ति । सम्यग्दर्शन-ज्ञान-चरित्राणि मोक्षमार्गः इति दर्शने अस्मिन् शिरोमणिवाक्यं भवति । यद्यप्येते जनाः शरीरभिन्नत्वेन आत्मानमभ्युपगच्छन्ति, तस्य जीवस्वरूपस्य कर्मनाशात् मोक्षः इत्यपि कथयन्ति तथापि एते वेदस्य प्रामाण्यं न स्वीकरिष्यन्ति इत्यतः वेदबाह्याः भवन्ति । सर्वज्ञत्वसर्वशक्तित्वसर्वव्यापित्वेन सूक्ष्मत्वागोचरत्वेन च वर्तमानस्य ईश्वरस्य स्थाने एते तीर्थङ्करान् निवेशयन्ति इति मतेऽस्मिन् वैशिष्टयम् । वेदबाह्यत्वात् अनीश्वरत्वाच्च एतेषां दर्शनस्य नास्तिकत्वकथनमागतमिति संक्षिप्तं जैनदर्शनम् ।

—※●※—

******************
* बौद्धदर्शनम्-९-१०-११-१२ अध्यायाः *
******************

## ९-१२- १) बौद्धदर्शनम् :-

इदानीं बौद्धदर्शनस्य उपोदघातात्मकः उपक्रमः आरभ्यते। मध्ये अध्यायचतुष्टयेन वैभाषिक-सौत्रान्तिक-योगाचार-माध्यमिक-दर्शनानि बुद्धतत्त्वानन्यतमानि प्रतिपाद्यन्ते । अन्ते उपसंहारेण पुनः बौद्धदर्शनं प्रतिपाद्यते । उपक्रमोपसंहारात्मकेनैकेन लिङ्गेन अध्याय-चतुष्टयानां कृते बौद्धदर्शनम् इत्येव शीर्षकं दीयते । मध्ये बौद्धचतुष्टयाना-मवान्तरभेदः प्रदर्श्यते । इदानीं बौद्धदर्शनं नाम किमिति पश्यामः।

बौद्धधर्मस्य प्रवर्तकः भगवान् गौतमः बुद्धः । अस्य बाल्यसमये सिद्धार्थः इति नाम आसीत् । यौवनदशायामेव अयं गृहत्यागं कृत्वा संन्यासं स्वीकृतवान् । जरामरणात्मकसंसारं दृष्टवा अस्य मनसि अयं विश्वासः समजनि यत् जीवनं दुःखात्मकं भवतीति । अतः दुःखस्य मुक्तये सिद्धार्थः संन्यासं स्वीकृतवान् । संन्यासग्रहणं कृत्वा अयं बुद्धः दुःखस्य मूलकारणं किम् ? एवं दुःखनिवृत्तये उपायान्वेषणे च स्वमतिं निवेशयामास । अतः अयं धर्मनिर्देशकानां एवं प्रगाढपण्डितानां सकाशे स्थित्वा आत्मविषयकशिक्षां प्राप । ग्रहीतशिक्षायाः साक्षात्करणाय तपस्तेपे । बाह्यविषयेषु तपस्यादिषु सफलता न प्राप्ता इति कृत्वा सम्पूर्णतः अयमात्मनिर्भरः अभूत् । दृढसङ्कल्पेन सह शुद्धमनसा घोरसाधनां कर्तुं सन्नद्धो भूत्वा दुःखस्य रहस्यं ज्ञातुं चेष्टा कृता। अन्ते प्रयत्नानुसारमेतेषां सिद्धिः प्राप्ता । बोधिवृक्षस्य अधः उपविश्य तत्त्वज्ञानं सम्पादितवान् इति वृक्षस्यास्य बोधिपदमाधारीकृत्य

बौद्धधर्मः, अथवा बुद्धेनोपदिष्टं यत् तद् बौद्धदर्शनमिति इदानीं व्यवहारः ।

## २) बौद्धदर्शनपरिचयः :-

बुद्धस्य मतानुसारं चत्वारि आर्यसत्यानि भवन्ति । तानि यथा- दुःखमस्ति, दुःखस्य कारणमस्ति, दुःखस्य अन्तवत्त्वमस्ति, दुःख दूरीकर्तुमुपायः अस्ति इति भविष्यन्ति । दुःखमस्ति इत्यमुं सत्यं सर्वे प्राणिनः अनुभवन्ति अभ्युपगच्छन्ति च । सूक्ष्मदृष्ट्या बुद्धस्य अयमनुभवः आगतः दुःखं केवलविशेषावस्थेष्वेव न भवति परन्तु संसारस्य सर्वेषां जीवानां सर्वास्वपि अवस्थासु विद्यमानत्वेन प्रतिभासते । यद्वस्तु अथवा यः अनुभवः सुखत्वेन तिष्ठति तदेव वास्तवदृष्ट्या दुःखात्मकं भवति इति चतुर्णां मध्ये प्रथमः । द्वितीयसत्यस्य स्वरूपं भवति - दुःखस्य कारणमस्तीति । कारणतत्वानुसन्धानद्वारा बुद्धेन अयं सिद्धान्तः प्रतिपादितः । अस्मिन् संसारे भौतिकानि अथवा आध्यात्मिकानि यानि वस्तूनि, इमानि सर्वाणि कारणादेव उत्पन्नानि । कारणं विना किमपि वस्तु न उत्पद्यते, अतः एव वस्तुनः अनित्यत्वमायातम् । सर्वाणि च वस्तूनि परिवर्तनशीलानि परिवर्तनशीलत्वादेव अस्माकं जन्ममरणस्यापि दुःखमेव कारणत्वेन तिष्ठति । या सांसारिकविषयेभ्यः अन्विष्यते तृष्णा सा एव अस्मान् जन्मनि बध्नाति । सा एव तृष्णा अस्मान् विषयलोलुपान् प्रचोदयति । अस्याः कारणमस्माकमज्ञानमेव भवति । यदि विषयेभ्यः समीचीनं ज्ञानं पुरुषस्य उत्पद्यते तदा तृष्णाकारणस्याज्ञानस्य उत्पत्तिर्न भवति । तदानीमस्माकं पुनर्जन्म नास्ति, एवं दुःखस्यापि विनाशो जायते ।

तृतीयसत्यं भवति - दुःखस्य अन्तवत्त्वमस्तीति । सत्यमेतद् सांसारिकजीवने स्पष्टं भवति । दुःखस्य यत् कारणं तस्य नाशानन्तरं दुःखस्यापि अन्तवत्त्वं दृश्यते लोके । चतुर्थसत्यं भवति - दुःखं दूरीकर्तुमुपायः । अस्मिन् अष्टौ पन्थानः सन्ति, यतः इमानि अष्टौ साधनानि भवन्ति । यथा- सम्यक् दृष्टिः, सम्यक् सङ्कल्पः, सम्यक् वाक्, सम्यक्

कर्मान्तः, सम्यक् आजीवः, सम्यक् व्यायामः, सम्यक् स्मृतिः, सम्यक् समाधिः इति ते तिष्ठन्ति । एतैः अष्टसाधनैः अविद्या एवं तृष्णा दूरीकर्त्तुं शक्यते । साधनद्वारा निर्मला बुद्धिरुदेति, अनन्तरं तस्यां दृढता जायते । एवं शान्तिर्मिलिष्यति । तदा दुःखस्य पूर्णविनाशो भवति । अनेन पुनर्जन्मस्य सम्भावना एव न तिष्ठति । अस्याः अवस्थायाः निर्वाणः इति संज्ञा । निर्वाणः एव मोक्षो भवति । एतेषां मतानुसारं एकजीवितस्य कर्मानुसारमन्यत् जन्म उत्पद्यते । एवंप्रकारेण जननमरणप्रवाहः जन्मनः जन्म इति चलति, बीजाङ्कुरवत् ।

अनन्तरकाले बौद्धमते सम्प्रदायद्वयस्य प्रादुर्भावोऽभूत् - हीनयानमहायानभेदेन । हीनयानस्य प्रचुरप्रचारः दक्षिणभारतलङ्काब्रह्मादिस्थानेषु प्रचलितत्वेनास्ति । महायानं मुख्यतः तिब्बतचीनाजापानप्रदेशेषु विस्तृतत्वेन वर्तते । विज्ञान-शून्यवादौ महायानान्तर्गतौ, वैभाषिकसौत्रान्तिकौ हीनयानान्तर्गतौ भवतः । अनयोः सम्प्रदायद्वययोः मध्ये मोक्षस्योद्देश्य किमित्यत्र मतभेदौ वर्तते । हीनयानानुसारं निर्वाणमेतद भवति यत् तद्वारा मनुष्यः स्वदुःखानामन्तवत्व कर्तुं प्रभवति इति । महायानमतानुसारं निर्वाणोद्देश्यं भवति एतद् केवलं स्वदुःखानामन्तवत्वं नास्ति अपितु सः पूर्णज्ञानप्राप्तो येन सहायेन दुःखग्रस्तानां सर्वेषां प्राणिनां दुःखात् विमोचनं कर्तुं प्रभवेत ताद्दशं ज्ञानं प्राप्नोत इति बौद्धदर्शनस्य सक्षिप्तः परिचयः ।

## ३) उपदेशविचारः :-

अन्यधर्मोपदेशकानुसारं भगवता बुद्धेनापि स्वधर्मप्रचारः मौखिकरूपेण कृतो दृश्यते । बुद्धस्य शिष्याः बौद्धाः अपि बहुकालपर्यन्तं तेषामुपदेशानां मौखिकरूपेण प्रचारं कृतवन्तः । एकदा मज्झिमनिकायग्रन्थानुसारं माणिक्यपुत्तः जैनवने विहारं कुर्वतः बुद्धस्य समीपं गत्वा इमान् प्रश्नानकरोत्- किमयं लोकः शाश्वतः अथवा किमयं लोकः अशाश्वतः ? अयं लोकः अन्तवत्वं भजते किंवा लोकोऽयमनन्तः ? शरीरजीवौ किमेकत्वेन अभिन्नात्मकं वस्तु अथवा शरीरजीवौ

परस्परभिन्नौ ? सम्बोधिप्राप्तये प्रयत्नं कुर्वन् मनुष्यः मरणानन्तरं सम्बोधिं प्राप्नोति, अथवा मरणानन्तरं सम्बोधं न प्राप्नोति ? मरणानन्तरं पुरुषः तथागतत्वेन भवति न भवति चेत्यस्ति ? उत मरणानन्तरं तथागतो न भवति न भवितुं शक्यते ? इति । एतेषां प्रश्नानामुत्तरं दातुं तेन कृताग्रहेण बुद्धः प्रत्यभाषत - एते सर्वे कथना-योग्यत्वेन अव्याकृताः भवन्ति इति । एतेषां प्रश्नानां सम्यक्तया उत्तरं दातुं न शक्यते, यतः आचार्यमार्गप्राप्त्यर्थं वैराग्योपशमलोकोत्तरज्ञान-परमज्ञाननिर्वाणानामुत्पत्तिकरणानि यानि, एतेषां ज्ञातव्यत्वे नास्ति अपेक्षा, अनवश्यकविषयवक्तव्ये नास्ति क्षमता इति स्वाभिप्रायं प्राचीकटत् गौतमो बुद्धः ।

बुद्धस्योपदेशेषु अयं मुख्यः भवति— सांसारिकजीवने दुःखं तिष्ठति, दु खमेतद सत्यम, नास्तीति केनापि अपलापितुं शक्यते । यदि दुःखमस्ति तर्हि तस्योत्पत्तिरपि स्यादेव, तदर्थं चिन्ता करणीया । यतः उत्पत्तिज्ञानाभावे तस्य निरोधार्थं प्रयत्नोऽपि न कृतो भवेत् । दुःख-निवारणाय प्रयत्नः तिष्ठति इत्यतः दुःखस्य उत्पत्तिरपि अस्ति । दुःखनिरोधानन्तरं विचारणीयो विषयः भवति यत् केन मार्गेण तस्योपलब्धिरिति । अतः प्रागेवोक्तानां चतुर्विधदुःखसमस्यानां सम्यक् ज्ञानसम्पादनं मानवमात्रस्य मुख्यं कर्म । बुद्धेन एताः समस्याः सम्यक् प्रतिबोधिताः सन्तः गुत्थिरूपेण कथिताश्च, अतः एते सम्यक् सम्बुद्धाः इति नाम्ना व्यवह्रियते ।

इदानीं बुद्धस्योपदेशाः त्रिपिटकद्वारा मिलिष्यन्ति । बौद्धानां वचनानुसारं बुद्धस्योपदेशाः एवं तस्य वचनानि च तच्छिष्यैः त्रिपिटकेषु लिखितत्वेन वर्तते । त्रिपिटकानि भवन्ति—विनयपिटकं, सुत्तपिटकं, अभिधम्मपिटकमिति । प्रत्येकस्य पिटकस्य सन्ति अनेके ग्रन्थाः । अतः एव ग्रन्थसमूहस्य पिटकमित्युच्यते । पिटकं नाम पेटिका भवति । विनयपिटके— सङ्घनियमाः उक्ताः, सुत्तपिटके बुद्धस्य वार्तालापाः एवं तस्योपदेशाः प्रतिपादिताः, अभिधम्मपिटके – दार्शनिकविचाराणां

संग्रहः कृतः । एतेषु त्रिपिटेषु केवलप्राचीनबौद्धधर्मस्यैव वर्णना कृता अस्ति ।

### ४) आर्यसत्यविचारः :-

बुद्धस्य शिक्षासारांशः तस्य आर्यसत्यचतुष्टयेषु निहितः अस्ति। इमानि आर्यसत्यचतुष्टयानि जनसाधारणानां कृते उपदेशात्मकानि भवन्ति । इदानीं तेषा स्वरूपविचारः क्रियते—

### ४-१) दुःखम् :-

रोगजरामरणभ्यः जीवनं दुःखमयं दृष्ट्वा सिद्धार्थस्य मनः अतीव क्लान्तः अभूत् । किन्तु यदा अयं सिद्धार्थः बुद्धत्वं प्राप्तः तदा मानवानां तथा मानवेतराणां च सर्वेषां जीवनं दुःखात्मकं भवति इति निष्कर्ष कृतवान् । जन्म, जरा, रोगः, मृत्युः, शोकः, क्लेशः, आकांक्षा, नैराश्यम्, इत्यादयः आसक्त्या एवोत्पद्यन्ते. अतः सव एते दुःखात्मकाः भवन्ति । क्षणिकविषयभोगस्य कृते प्रवर्तमाना आसक्तिरेव पुनर्जन्मादिबन्धनस्य कारणं भवति अतः बुद्धस्य वचनं सासारिकजीवनमेतद् दुःखात्मकम् इति । सांसारिकसुखानि न वास्तविकानि, इमानि क्षणिकानि । एतेषां सुखानां नाशानन्तरं दुःखमुत्पद्यते । सर्वे च चिन्तयन्ति यत् सुखं मे स्यात्, दुःखं मा भूयात् इति । एवमनेके विषयाः दुःखत्वेन परिणमन्ते । तस्मात् अनेन कारणेन सांसारिकसुखानि न वास्तविकसुखानि,आसक्त्या दुःखात्मकानि भवन्ति इति दुःखस्वरूपम् ।

### ४-२) दुःखस्य कारणम् :-

सर्वे दार्शनिकाः दुःखस्यास्तित्वं मन्यन्ते, किन्तु दुःखस्य कारण-प्रतिपादनविषये तेषु ऐकमत्यं नास्ति । बुद्धः प्रतीत्यसमुत्पादानुसारं दुःखस्य कारणं ज्ञातुं प्रयत्नं कृतवान् । प्रतीत्यसमुत्पादानुसारं न कोऽपि संसारस्य विषयः विना कारणं तिष्ठति । सर्वं वस्तु किमपि कारणमधिष्ठाय प्रतिभासते । अतः यावत्पर्यन्तं कारणं तिष्ठति तावत् दुखमनुभूयते, कारणाभावे दुःखोत्पत्तिः न भवति । जीवनदुःखानां

सांकेतिकत्वेन जरामरणे तिष्ठतः । इमे जरामरणे शरीरधारणादेव भवतः । सति शरीरे तस्य जरामरणे इति व्याप्तिरपि तिष्ठति । अर्थात् जन्मग्रहणं या जातिः सा एव दुःखस्य कारणीभूता भवति । प्रतीत्यसमुत्पादानुसारं जन्मनः अपि एकं कारणं तिष्ठति, तदेव भवात्मकत्वेनोच्यते । भवः एव प्रवृत्तिरस्ति । प्रवृतेः कारणं तु सांसारिकविषयाणां प्रति यदस्माकमुपादानं तदेव भवति । एतदुपादान-मपि शब्दस्पर्शादितृष्णावासनया उत्पद्यते । तृष्णायाः कारणत्वेन पूर्वानुभूतविषयस्तिष्ठति । अर्थात् इन्द्रियद्वारा अस्माकं सुखानुभूति जायते, तया अनुभूत्या एव तृष्णा उदेति, तृष्णायाः कारण वेदना अस्ति । इय वेदना इन्द्रियानुभूतिं विना केवल इन्द्रियस्पशमात्रण न जायते । तथा च इन्द्रियाणां विषयेषु सह सम्बन्धः आवश्यकः । अतः वेदनायाः अस्ति स्पर्शस्यापेक्षा, स्पर्शोऽपि ज्ञानेन्द्रियद्वारा उदेति । तस्मात् स्पर्शः पञ्च ज्ञानेन्द्रियाणामेव मनसः च साकं भविष्यतीति वक्तव्यम् । बौद्धमते मन आदिषण्णामेतेषां षडायतनमिति सज्ञा । गर्भस्थस्य भ्रूणशरीरमनसोः नामरूपत्वेन व्यवहारः । यदि गर्भस्थशिशौ चैतन्यं न तिष्ठति तर्हि नामरूपस्य वृद्धिरपि न जायते । किन्तु गर्भावस्थायां चैतन्यस्य सम्भावना तदा भवति यदा पूर्वजन्मसंस्कारस्य स्थितिः जाग्रत्त्वेन तिष्ठति । यतः पिशाचिदर्शनवत् अकस्मात् चैतन्यस्य सम्भवः न भवति । पूर्वजन्मनः अन्तिमावस्थायां तज्जन्म-गतानां सर्वेषां कर्मणां प्रभावः तिष्ठति । कर्मानुसार यः सस्कारः उदेति तस्य कारणत्वेन चैतन्यस्य सम्भवो नाम अस्तित्वमभ्युप गन्तव्यम् । संस्काराणामुपादानकारणमविद्या भवति । इयमविद्या मिथ्याज्ञानमिति भण्यते । एतदेव भवति जन्मनः मूलकारणम् ।

एवं प्रतिपादितप्रकारेण एतत्सिद्धं यत्— (१) दुःखं सकारणम्, (२) दुःखस्य कारण जातिः, (३) जातेः कारणं भवः, (४) भवस्य कारणमुपादानम्, (५) उपादानस्य कारणं तृष्णा, (६) तृष्णायाः कारणं वेदना, (७ वेदनायाः कारण स्पर्शः, (८) स्पर्शस्य कारणं षडायतनम्, (६) षडायतनस्य कारणं नामरूपे भवतः (१०)नामरूपयोः

कारणं चैतन्यमथवा विज्ञानम्, (११) विज्ञानस्य कारणं संस्कारः, (१२) संस्कारस्य कारणमविद्या इति द्वादशनिदानानामेका श्रृङ्खला जाता इति । इयं श्रृङ्खला भूतभविष्यद्वर्तमानत्वेन विभक्ता अस्ति । तत्र अविद्यासंस्कारौ भूतजीवनत्वेन, भवजरामरणजातयः भविष्य-जीवनत्वेन, अवशिष्ठाः विज्ञाननामरूपषडायतनस्पर्शवेदनातृष्णा - उपादानादयः वर्तमानजीवनत्वेन इयं निदानश्रृङ्खला विभज्यते । एवं द्वितीयस्य आर्यसत्यस्य विचारः ।

## ४-३) दुःखनिरोधः :-

दुःखनिरोधः एव निर्वाणमित्युच्यते । दुःखकारणं यत् तस्मिन् नष्टे सति दुःखस्यापि अन्तवत्त्वमवश्यं भवति । दुःखनिरोधावस्थामेव सम्यक-ज्ञानेन ज्ञातव्या । इयमवस्था एव निर्वाणावस्था इति गीयते । निर्वाणस्य प्राप्तिः जीवनकाले एव भवति । रागद्वेषादिषु विजयं प्राप्य शुद्धाचरणेन आर्यसत्यानां निरन्तरं ध्यानं कृत्वा यदि कोऽपि मनुष्यः समाधिद्वारा ज्ञानं प्राप्नोति तदा तस्य चित्तं लोभमोहादिभ्यः मुक्तं भवति । दशायामस्यां तृष्णा न तिष्ठति । समयेऽस्मिन् सः मनुष्यः आध्यात्मिकशत्रोरुपरि सम्पूर्णविजयप्राप्ति साधयति, सर्वथा मुक्तश्च भवति । मोक्षं प्राप्तस्य पुरुषस्य बौद्धमते "अर्हं" इति पदेन व्यवहारः । मोक्ष एव निर्वाणमित्युच्यते । निर्वाणार्थः न अकर्मण्यता । यद्यपि आर्यसत्यानां सम्यग्ज्ञानप्राप्त्यर्थं बाह्यवस्तुभ्यः मनसः एवं आन्तरिक-भावानां त्यागः कर्तव्यः, एवं आर्यसत्येषु केन्द्रीकृतचित्तः सन् तेषां सत्यानां निरन्तरविचारः, एवं मननमपि करणत्वेन विधीयते तथापि अखण्डसमाधिद्वारा स्थायीरूपप्रज्ञाप्राप्त्यनन्तरं समाधौ मननस्यापेक्षा नास्ति, एवं जीवनकर्मभिः वैराग्यसम्पादनस्यावश्यकत्वमपि नास्ति । यतो हि ज्ञानप्राप्त्यनन्तरमपि बुद्धः परिभ्रमणधर्मप्रचारसङ्घस्थापनादि-कार्येषु सक्रियः आसीत् । अनेन एतद् ज्ञातुं शक्यते यत् स्वयं बौद्धधर्म-प्रवर्तकः जीवननिर्वाणानन्तरमेव सम्पूर्णतया कार्यरतो भवति । अतः कर्माभावत्वेन, मोक्षः नोच्यते । रागद्वेषादयः कर्तृत्वकर्मत्वादिना एव

बन्धनहेतवः भवन्ति । बुद्धमतानुसारं कर्म द्विविधम् — एकं कर्म रागद्वेषमोहादिकारणात्मकम्, अन्यत् रागद्वेषमोहाद्यभावात्मकम् इति । प्रथमप्रकारात्मकं कर्म अस्माकं विषयानुरागस्य वृद्धिं करोति. एवं तत्कर्म संस्कारजनकत्वेन तिष्ठति, तेन संस्कारेणैव जन्म अविरतं स्वीक्रियते । द्वितीयं तु कर्म अनासक्तभावेन अनुष्ठीयते, एवं संसारस्य अनित्यत्वं बुध्यते, अनया भावनया पुनर्जन्मसम्भावना नास्ति । स्वयं बुद्धोऽपि निर्वाणप्राप्त्यनन्तरं स्वस्मिन् निष्क्रियो भूत्वा अन्येषां दुःखपीडितानां मानवानां कृते करुणया लोककल्याणकार्यप्रवर्तनाय बुद्धदीक्षो भूत्वा देशान्तरपर्यटनं कृत्वा जनानां दुःखनिवारणोपायं बोधयित्वा लोकस्य हितं चकार । अनेन वाक्यजातेन एतद् स्पष्टं भवति यत् निर्वाणप्राप्त्यनन्तरं सः अर्हत् निष्क्रियत्वेन न तिष्ठति, परं च तस्मिन् निर्वाणानन्तरमेव अन्येषां प्रीतिः दया इत्यादयः वर्धन्ते । निर्वाणार्थः न जीवनस्य नाशः अपितु दुःखानामन्तवत्त्वमित्युच्यते । मरणानन्तरं निर्वाणप्राप्तस्य अवस्थासम्बन्धे बुद्धेन किमपि न भणितमित्ययं प्रश्नः निराधारात्मकस्तिष्ठति ।

निर्वाणेन लाभद्वयं मिलिष्यति । एकः लाभः निर्वाणप्राप्त्यनन्तरं पुनर्जन्म एवं दुःखस्य सम्भवः न भवतीति । अन्यः भवति – यदा यस्य निर्वाणप्राप्तिर्जायते तदा तस्य जीवनं मरणपर्यन्तं पूर्णज्ञानेन शान्त्या च तिष्ठति । निर्वाणानन्तरं या शान्तिर्लभ्यते तस्याः तुलना सांसारिकदुःखैः सह न भवति । निर्वाणावस्था पूर्णतया शान्ता स्थिरा तृष्णाविहीना च भवति । साधारणैरनुभवैः अस्याः वर्णनं न कर्तुं शक्यते । पूर्णनिर्वाण-प्राप्तेः पूर्वमपि वासनानां आंशिकनाशेनैव निर्वाणस्य केचन लाभाः मिलिष्यन्ति, निर्वाणं तु वर्णनातीतं इति निर्वाणस्वरूपम् ।

### ४-४) दुःखनिरोधे मार्गः :-

निरोधप्राप्त्यर्थं यः मार्गः स एव दुःखनिरोधमार्गः । अस्मिन् मार्गे अष्टौ अङ्गानि सन्ति । तानि यथा - (१) सम्यक् दृष्टिः (२) सम्यक्

संकल्पः (३) सम्यक् वाक् (४) सम्यक् कर्मान्तः (५) सम्यगाजीवः (६) सम्यक् व्यायामः (७) सम्यक् स्मृतिः (८) सम्यक् समाधिः इति । एतेषामनुसरणेनैव भगवान् बुद्धः दुःखातीतामवस्थां लब्धवान् । यैः कारणैः दुःखस्योत्पत्तिर्भवति तेषां नाशकरणाय यः उपायः सः एव निर्वाणमार्गः इत्युच्यते ।

सम्यक् दृष्टिः - अविद्यावशात् आत्मनः एवं संस्कारसम्बन्ध मिथ्यादृष्टेश्च उत्पत्तिर्भवति । सर्वदुःखानामविद्या एव मूलकारणात्मिका अस्ति । अविद्यया एव हि मिथ्यादृष्टिरुदेति । अनया एव जीवाः अनित्ये दुःखदायके अनात्मवस्तुनि नित्यत्वं सुखकरत्वमात्मरूपत्वं मन्यन्ते । एतादृशीं दृष्टिं त्यक्त्वा वस्तूनां यथार्थस्वरूपज्ञानाय ध्यानं स्वीकर्तव्यम् । ध्यानात्मिका इयं दृष्टिः सम्यग्दृष्टिरिति व्यवह्रियते ।

सम्यक् संकल्पः—आर्यसत्यानां ज्ञानमाध्यमेन न कोऽपि लाभः, यावत्पर्यन्तं सत्यानुसारं स्वजीवननिर्वर्तने दृढसंकल्पः न स्यात् । यदा मुमुक्षुर्भवति तदा तेन सांसारिकविषयाणामासक्तिः, अन्येषां प्रति विद्वेषः, एवं हिंसा इति त्रयाणां परित्यागकरणे दृढसंकल्पः कर्तव्यः । अयमेव सम्यक् संकल्पः ।

सम्यक् वाक्—सम्यक् संकल्पः केवलं मानसिकत्वेन न, किन्तु सः संकल्पः कार्यरूपेण परिणतो भाव्यः । सम्यक् संकल्पानुसारं प्रथमं वचननियन्त्रणं कार्यम् । अर्थात् मिथ्यावादिता, निन्दा अप्रियवचनानि न कदापि उच्चारणीयानि । दशायामस्यां वाक् सम्यक् वाक् भवति, उपदेशयोग्या च तिष्ठति ।

सम्यक् कर्मान्तः—सम्यक् संकल्प केवलंवचनेन नानुष्ठानम्, अपितु कर्मण्यपि परिणितत्वम् । अहिंसा, अस्तेयः, इन्द्रियनिग्रहादयः सम्यक्-कर्मान्ताः भविष्यन्ति ।

सम्यगाजीवः— दुष्टवचनं, दूषितं कर्म च त्यक्त्वा त्यागेन सह मनुष्येण शुद्धोपायैः जीविकोपार्जनं सम्पादनीयम् । जीवननिर्वाहार्थं उचितमार्गानुसरणं एवं निषिद्धोपायानां वर्जनं कृत्वा स्वसंकल्पस्य सुदृढता आरक्षणीया इति सम्यगाजीवः ।

सम्यक् व्यायामः – सम्यक् दृष्टि-सङ्कल्प-वचन-कर्म-जीविकानुसारं गच्छतः पुरुषस्य पूर्वसंचितकुसंस्काराणां कारणेन उचितमार्गात् स्खलितत्वं स्यादेव, एवं संस्कारानुसारं मनसि नूतनानां भावनामुत्पत्तिरपि भवेत् । अतः अस्य नाशाय निरन्तरप्रयत्नः कर्तव्यः। अयं प्रयत्नः चतुर्विधः - पुरातनानां कुसंस्काराणां सम्पूर्णतया नाशकरणे इच्छा, नूतनदुष्टभावाः मनसि यथा नागच्छेरन् तथा प्रयत्नः, समीचीनविषयविचारेषु मनसः संलग्नीकरणम, एवं मनसि शुभविचाराणां धारणं सर्वदा भवितुं सन्ततं चेष्टा इति । एतैः प्रयत्नैः साध्यमानस्य कर्मणः सम्यक व्यायामः इति उच्यते । अनेन षष्ठनाङ्गेन अस्यार्थस्य बोधो जायते यत् धर्ममार्गे गच्छतः उत्तमकोटिपुरुषणापि स्वप्रयत्नभङ्गाय स्वप्रयत्ननाशाय वा कदापि अवसरो न देयः । अर्थात् धर्ममार्गात् स्खलनं सर्वेषां सदा सम्भाव्यमान तिष्ठति ।

सम्यक् स्मृतिः— अस्मिन् मार्गे गन्तुं मनुष्येण तर्कवता भवितव्यम् । येषां विषयाणां ज्ञानप्राप्तिर्जाता ते सर्वे सर्वदा स्मृत्या साक्षात्कर्तव्याः तत्तद्वस्तुनिष्ठसत्यत्वेन । यथा शरीरस्य-शरीरम्, वेदनायाः- वदना इत्यादि । सर्वदा तत्तद्वस्तुत्वेन आत्मनः व्यवहारः न कार्यः । यथा – अनेन रूपेण, अहमस्मि, एतन्मदीयमित्यादयः । कस्यापि वस्तुनः आच्छादितस्वरूपं विना तस्य स्वाभाविकस्वरूपज्ञाने प्रयत्यते । विचार्यमाणे सति सर्वेषां विषयाणां स्वाभाविकस्वरूपज्ञाने नास्ति क्लेशः इति इद तत्वमायाति । शरीरमेतद् मिथ्याज्ञानेन सम्वलितत्वात् तस्य यथार्थस्वरूपं ज्ञातुमस्ति महान् क्लेशः । यतः शरीरेऽस्मिन् मिथ्याविचाराणामनुसारं कर्तुत्वभोक्तृत्वादीनां ज्ञानसम्पादनमेव स्वाभाविक भवति । सामान्यतः सर्वः जनः शरीरचितवेदनामानसिकअवरुद्धान् नित्यसुखदायकत्वेन मन्यते । अतः एव तेषु शरीरादषु प्राणिनः आसक्तिः बधते, आसक्तिवशेन क्लेशः अनुभूयते च । एव सर्वे शरीरात्मकेऽस्मिन् बन्धने पतिताः सन्तः फलस्वरूपेण ते दुःखं भजन्ते । यदि कोऽपि यथार्थज्ञानेन वक्तृत्व

स्वीकरिष्यति तदा अनित्यादिषु दुःखदायकेषु आसक्तिः न्यूना भविष्यति, गते काले सति सम्पूर्णतया सा आसक्तिः नष्टा भवति । आसक्तेः नाशानन्तरं दुःखस्योत्पत्तिर्न जायते । अवस्थामिमां सम्पादयितुं सम्यक् स्मृतेरपेक्षा अस्ति ।

दीघनिकाये, बुद्धेन सम्यक्स्मृतेः स्वरूपं विस्तरेण प्रपञ्चित-मस्ति । शरीरसम्बन्धे तेन भणितं यत् शरीरमेतत् वाय्वादिभूतचतुष्टयैः निर्मितमस्तीति । शरीरमध्ये स्थिताः मांसरुधिरकफवातपित्तादयः हेयवस्तुभिरुत्पन्नाः इति एतेषु विषयेषु समीचीना स्मृतिः सम्पादनीया । यतः जीवस्य मरणानन्तरं शरीरमेतद् श्मशाने नीयते, तत्र शुनकादीनां भक्षणत्वेन स्थास्यति एतच्छरीरम्, अथवा भस्मसात्कृत्य खनन-माध्यमेन भूमौ निक्षिप्य अन्ते भूतचतुष्टयेष्वेव विलीनं भवति शरीर-मेतत् । एवमादीनां विषयाणां अविरतस्मरणेन शरीरस्य वास्तविकं रूपं किमिति ज्ञातुं शक्यते । अन्ते पूर्णतः तेषु बाह्यविषयेषु अनासक्तो भूत्वा तज्जनितदुःखानां भागी अपि न भवति । तस्मात् संक्षेपतः एतत् वक्तुं शक्यते यत् सम्यक्स्मृत्या एव मनुष्यः सर्वेभ्यः विषयेभ्यः विरक्तो भवति, एवं सांसारिकबन्धनात् मुक्तो भवतीति ।

सम्यक् समाधिः— एवं प्रतिपादितसप्तमार्गानुशारं गच्छन् मनुष्यः बुद्धौ आगतकष्मलवृत्तीः दूरीकृत्य सम्यक्समाधौ प्रवेष्टुं योग्यो भवति । एवमेव क्रमशः समाधेः अवस्थाचतुष्टयं तीर्त्वा निर्वाणस्य प्राप्तिं लभते । समाधि-अवस्थाचतुष्टयेषु प्रथमः भवति – शान्तचित्तेन आर्यसत्यानां सतर्कविचारः कर्तव्यः । अनेन विरक्तिः एवं शुद्धविचार-कारणेन तस्मिन् अपूर्वानन्दस्य एवं शान्तेरनुभवः भवति इयं ध्यानस्य प्रथमावस्था । ध्यानमेव समाधिरित्युच्यते । द्वितीया अवस्था भवति— पूर्वावस्थायां सर्वे सन्देहाः दूरीकृताः भवन्ति । अनेन यदा आर्यसत्येषु श्रद्धा वर्धते, एवं विषयविचारः अनवश्यकत्वमापद्यते तदा द्वितीयावस्था जागर्ति । अस्यां दशायां प्रगाढचिन्तनकारणेन शान्तिः, तस्याः स्थिरता च उत्पद्यते, शान्त्यानन्दयोः ज्ञानमपि युक्तत्वेन तिष्ठति । तृतीया-

वस्थायाम्—शान्त्यानन्दयोः मानसिकव्यापारं दूरीकृत्य एकमपेक्षाभावं लब्धु प्रयत्नः क्रियते । अनेन प्रयत्नेन चित्तस्य साम्यावस्था एवमनया सह दैहिकसुखभावोऽपि तिष्ठति । अनयोः चित्तसुखयोः बोधः जायते, किन्तु समाध्यानन्दं प्रति उदासीनता आगमिष्यति इति विवेकः । ध्यानस्य चतुर्थावस्थायां चित्तस्य साम्यावस्था, दैहिकसुखानुभवः एवं ध्यानानन्दे एतेषां भानं न भवति । चित्तवृत्तेः निरोधः जायते । इयमवस्था पूर्णशान्तिः, पूर्णवैराग्यम् पूर्णनिरोधात्मिका सुखदुःखरहिता च भवति । यदा दुःखानां सर्वथा निरोधः जायते तदा अर्हत्वं निर्वाणं वा प्राप्नोति पुरुषः । इयं पूर्णप्रज्ञावस्था इत्युच्यते इति चतुर्थ-आर्यसत्यविचारः ।

## ५) प्रतीत्यसमुत्पादः :-

वादममुं भगवान् बुद्धः महत्वपूर्णतया अभ्युपागच्छत् । एते अस्य वादस्य 'धर्मः' इति नाम दत्तवन्तः । विषयेऽस्मिन् बुद्धस्य आग्रहः आसीत्—पदार्थस्य आद्यन्तविचारः निरर्थकः । अहं धर्मोपदेशं कर्तुं वाञ्छामि । अनेन अस्य एवं भवतीति धर्मादेव सिध्यति । वस्तुनः आगमनानन्तरं धर्मस्योत्पत्तिर्जायते । धर्मस्याभावे किमपि न तिष्ठति । यदा येन प्रतीत्यसमुत्पादः ज्ञातो भवति तदा तेन धर्मोऽपि ज्ञातः भवति, यदि प्रतीत्यसमुत्पादः न ज्ञातः तर्हि धर्मोऽपि न ज्ञातपूर्वो भवति इति । एवं बुद्धः धर्मस्य तुलनां सोपानमार्गेण करोति । अमुं सोपानमार्गमारुह्य मनुष्यः बुद्धदृष्ट्या संसारं द्रष्टुं प्रभवति । अस्माकं दुःखकारणमेतदस्ति यत् वयं सांसारिकविषयान् बुद्धदृष्ट्या न पश्यामः । बुद्धः अमुं प्रतीत्यसमुत्पादं अत्यन्तमावश्यकमिति अमन्यत् ।

## ६) क्षणिकवादः :-

प्रतीत्यसमुत्पादानन्तरं सर्वेषां सांसारिकवस्तूनां अनित्यत्वं प्रमाणितं भवति । सर्वाणि वस्तूनि परिवर्तनशीलानि अन्तवन्ति च सन्ति । वस्तुनः उत्पत्तये किमपि कारणमवश्यं तिष्ठति । अतः कारणनाशानन्तरं कार्यस्य वस्तुनः अपि नाशः । यस्य आदिमत्त्वं तस्य

अन्तवत्त्वमपि अवश्यं तिष्ठति । कियन्ति उत्पत्तिमद्द्रव्याणि सन्ति तेषामुत्पत्तिः कारणानुसारं जाता, सर्वे पदार्थाः सर्वविधत्वेन अनित्याश्च भवन्ति इति बुद्धस्य डिण्डिमः । नित्यत्वेन दृश्यन्ते पर्वतादयः तेषामपि नाशः कालान्तरे अस्त्येव । यः महान् तस्यापि पतनं सम्भवति । यस्संयोगः तस्य वियोगोऽपि भवति । यत्र जन्म तत्र मरणमवश्यम्भावि । सांसारिकविषयाणां वर्णनसमये बुद्धः अनित्यवादमुपस्थापयति । बुद्धस्यानुयायिनः अनित्यवादस्यास्य क्षणिकवादस्य रूपं ददुः । क्षणिकवादस्यार्थः अय नास्ति यत् किमपि वस्तु नित्यं शाश्वतं च नास्तीति । किन्तु एतदर्थव्यतिरिक्तत्वेन अन्योऽपि अर्थः भवति — वस्तुनः अस्तित्वं कियत्कालपर्यन्तं न तिष्ठति, अपितु एकं क्षणं यावत् वस्तु तिष्ठति । अनन्तरकाले क्षणिकवादसमर्थनाय अनेकाः युक्तयः प्रदर्शिताः । तत्र एका युक्तिः – वस्तुनः सत्ता लक्ष्यत्वेन तिष्ठति, "अर्थक्रियाकारणत्वं सत्वं" इत्युक्त्या अर्थक्रियाकारत्वेन सत्वं वस्तुनि अवतिष्ठते । शशश्रृङ्गादयः असद्भूताः, यतः तेषु अर्थक्रियाकारित्वं नास्ति । यदि सत्तायाः लक्षणमिदमुच्यते अनेन एतत्सिद्धं यत् सद्रूपं तत् क्षणिकमिति । अस्यैव वादस्य क्षणिकवादः इति व्यवहारः ।

## ७) अनात्मवादः :-

सर्वाणि च वस्तूनि परिवर्तनं विना न तिष्ठन्ति । जनानां मध्ये एका धारणा अस्ति यत् देहान्तर्गतत्वेन आत्मनामकमेकं चिरस्थायि वस्तु अस्तीति । शरीरस्य परिवर्तने भवत्यपि आत्मा अपरिणतः सन् कालत्रयेऽप्यपि तिष्ठति । अस्य सत्ता शरीरजन्मनः प्राक् एवं मरणानन्तरमपि सिध्यति । सः एकस्य शरीरस्य नाशानन्तरं अन्यस्मिन् तस्य प्रवेशो भवति इत्यादि सर्वं भावं बुद्धः न मनुते । यतः प्रतीत्यसमुत्पादानुसारं परिवर्तनशीलदृष्टधर्मातिरिक्तत्वेन किमपि अदृष्टं स्थायीभूतं वस्तु कालत्रयवर्तित्वेन नास्ति, नाभ्युपगम्यते च । अतः बुद्धः शरीरातिरिक्तत्वेन आत्मानं न मनुते । अतः अस्य वादः अनात्मवादः इति लोके प्रथां प्राप ।

ननु यदि बुद्धेन आत्मनः नित्यत्वं न मन्यते तर्हि पुनर्जन्मनि तस्मिन् विश्वासः कथं भविष्यति ? इदानीं जीवति शरीरे बाल्यादारभ्य वार्धक्यपर्यन्तं विभिन्नासु अवस्थासु कथं स्थायित्वेन सः तिष्ठेत इति चेत् - उच्यते । स्थिरत्वेन आत्मनः अस्वीकारेऽपि जीवनमेतद् विभिन्नक्रमबद्धानां अव्यवस्थितावस्थानां सन्तानत्वेन तिष्ठति इति पक्षमिमं स्वीकरोति । विभिन्नावस्थानां सन्ततिरेव जीवनमिति व्यवहारः। अस्याः सन्ततेः अन्तरत्वेन वर्तमानायाः अवस्थायाः उत्पत्तिः पूर्ववर्ति-अवस्थातः जायते. एवमेव जीवने वर्तमानावस्था अन्यानवस्था-मुत्पादयति, जीवनस्य विभिन्नावस्थासु पूर्वापरत्वेन कार्यकारणसङ्घात-स्तिष्ठति। अतः एव जीवनं एकत्वेन अनुभूयते। जीवनस्य एकसूत्रता सायंकालादारभ्य प्रभातपर्यन्तं जाज्वल्यमानदीपवत् प्रतिपादयितुं शक्यते । क्षणे क्षणे दीपस्य अवस्थाः विपरिणमन्ते, सत्यप्येवं तस्य दीपस्य एकत्वमुच्यते यथा तथा आत्मा इति द्रष्टव्यम्। दीपमध्ये प्रतिक्षणं ज्योतिः भिन्ना भिन्ना भवति तथापि अविच्छिन्नत्वेन सा ज्योतिः एका इत्युच्यते । पुनर्जन्म-विषयकविचारं दूरीकर्तुमेव बुद्धेन दीपदृष्टान्तः प्रतिपादितः । तथा च यावत्पर्यन्त दीपः ज्वलति तावत्पर्यन्तं दीपे प्रकाशः अस्तीति उच्यते । दीपनाशानन्तरं ज्योतिः न तिष्ठति, अन्यस्मिन् दीपे इयं ज्योतिर्न भवति इति दृष्टान्तानुसारं दार्ष्टान्तिकः आत्मा अभ्युपेयः। एकाग्निकणेन अन्यस्य अग्निकणस्य सृष्टिर्भवितुं शक्यते यथा तथा वर्तमानजीवनस्य अन्तिमावस्था एव भविष्यजीवनस्य प्रथमावस्थात्वेन तिष्ठति, किन्तु अन्तिमप्रथमावस्थे परस्परं भिन्ने इत्यभ्युपगमात् एकस्य जीवनस्य अन्येन जीवनेन सह सम्बन्धो नास्ति । एवं पुनर्जन्म सर्वथा सम्भवति । बौद्धाभिमतं पुनर्जन्म इत्यत्र अन्यदर्शनानुसारं प्रतिपादितः आत्मा नित्यः, सः शरीरात् शरीरान्तरं प्रविशति इत्ययमर्थः न स्वीकर्तव्य इति सिध्यति ।

वर्तमानमानसिकवस्थायाः कारणं पूर्ववर्ती मानसिकावस्था भवति। अतः एव पूर्ववर्ति-अवस्थायाः प्रभावः वर्तमानावस्थायां पतति। एवमात्मनि विश्वासं विनापि उक्तरीत्या स्मृतेः उपपादनं कर्तुं शक्यते । अयमनात्मवादः

बुद्धोपदेशं ज्ञातुं महदुपकरोति । बुद्धः सर्वशिष्येषु आग्रहं कृतवान्-भवद्भिः सर्वैः आत्मविषयक-मिथ्याविचारः अवश्यं परित्यक्तव्यः इति । आत्मनः यथार्थस्वरूपं न ज्ञातुं शक्यते यस्य तस्मिन् तद्भ्रान्तिविचारः अवश्यं तिष्ठति । एतादृशः पुरुषः आत्मनः सत्यं ज्ञात्वा तस्मिन् आसक्तो भवति । अनया आसक्त्या आकांक्षा तिष्ठति यत् मोक्षप्राप्त्या आत्मनः सुखमनुभवितुं शक्यते इति । बुद्धस्य कथनानुसारं अप्रमाणिते आत्मनि प्रेमनिधानं हास्यास्पदं भवति । तथा च आत्मनः नित्यत्वाभ्युपगमेन आत्मनि आसक्तिः वर्धते, इयमासक्तिः दुःखोत्पत्तये कारणं भवति । सति दुःखकारणे दुःखस्य नाशः न जायते । दुःखनाशाभावे कैवल्यं नास्ति । तस्मात् आत्मनि विश्वासं न विधातुं शक्यते इत्यतः अनात्मवादं प्रत्युपस्थापयति ।

समष्टिभूतस्य एकस्य वस्तुनः नाम मनुष्यः इति । यथा चक्रधुरीनेमादिसमूहः रथः इत्युच्यते तथा रूपयुक्तं बाह्यं शरीरं मानसिकावस्थाः, विज्ञानं एतेषां समूहात्मकसङ्घातस्य मनुष्यः इति व्यवहारः । यावत् समष्टिः तिष्ठति तावत्पर्यन्तं मनुष्यस्य अस्तित्व-मभ्युपगम्यते । यदा समष्टेर्नाशः तदा मनुष्योऽपि अन्तवत्वं भजते । सङ्घातातिरिक्तत्वेन आत्मनामकमन्यद् वस्तु नास्ति । अन्यदृष्ट्या तु मनुष्यः पञ्चप्रकारात्मकपरिवर्तनशीलतत्वानामेकः समूह इति भवति । अयमेव पञ्चस्कन्धः । पञ्चस्कन्धमाध्यमेनैव जीवस्य स्वरूपं ज्ञातुं शक्यते । इमे त पञ्चस्कन्धाः - प्रथमस्कन्धः रूपम्, मनुष्यशरीरे वर्तमानाः आकारः वर्णः इत्यादयः रूपान्तर्गतत्वेन तिष्ठन्ति । द्वितीय-स्कन्धः भवति वेदना, सुखदुःखविषादानां बोधः अनेन जायते । तृतीय-स्कन्धः - सञ्ज्ञा, अर्थात् नानाविधानि ज्ञानानि । चतुर्थस्कन्धस्तु संस्कारः । पूर्वकर्मणां कारणत्वेन यासां प्रवृत्तीनामुत्पत्तिर्जायते तासां संस्कारः इति अभ्युपगमः । पञ्चमस्कन्धत्वेन शरीरं मेलनं वा तिष्ठति । तथा च बौद्धदर्शने पञ्चस्कन्धसंयोगः एकः मनुष्यः अथवा जीवः इत्युच्यते इति विवेचनीयम् ।

## ८) हीनयानविचारः :-

दक्षिणदेशे हीनयानस्य प्रचारः, एवमुत्तरदेशे महायानस्य प्रचारः इति प्रागेव अवोचाम । बौद्धदर्शने धार्मिकविषयमधिकृत्य मतद्वयमुत्पन्नम् । हीनयानम् अन्यत् महायानमिति । हीनयानं थेरावादः इत्यप्युच्यते । अस्मिन् हीनयाने बौद्धधर्मस्य प्राचीनस्वरूपं ज्ञातुं शक्यते । हीनयानानुयायिनः जैनधर्मवत् अनीश्वरवादिनः । मतेऽस्मिन् ईश्वरस्थाने कर्म एवं धर्मः स्वीकृतौ भवतः । संसारस्य परिचालनं धर्मद्वारा भवति । धर्मेण कर्मफलस्य नाशो न भवति, प्रत्युत स्वकर्मानुसारमेव प्रत्येको जीवः मनशरीरनिवासस्थानानां प्राप्ति लभते । बुद्धस्य जीवनमेवं उपदेशान् स्वजीवनस्य लक्ष्यत्वेन स्वीकरोति, एवं बन्धनग्रस्तः स्वयमपि निर्वाणं प्राप्नोति । स्वधर्मानुयायिनां सह सङ्घबद्धत्वेन तिष्ठन्नपि सः आध्यात्मिकजीवनसहायता मिलिष्यति । अतः एव एते "बुद्धं शरणं गच्छामि, धर्मं शरणं गच्छामि, सङ्घं शरणं गच्छामि" इति ब्रुवन्ति । एतन्मतानुयायिनां स्वशक्तेरुपरि सम्पूर्णः विश्वासस्तिष्ठति । एवं नियामके धर्मे सम्पूर्णा श्रद्धा स्थास्यति । बुद्धेन प्रतिपादितमार्गानुसारेण अवश्यं निर्वाणप्राप्तिः भविष्यति । हीनयानस्य लक्ष्यमस्ति यत् अर्हत्वमथवा निर्वाणप्राप्तिः इति । एतन्मतानुसारं मनुष्यः स्वप्रयत्नेनैव लक्ष्यभूतं निर्वाणं प्राप्नोति । बुद्धस्योपदेशो भवति- "आत्मदीपो भव" इति । अयमुपदेशः एव एतेषां मूलमन्त्रः, एतदनुसारं एकैकोऽपि मनुष्यः स्वचेष्टया स्वकल्याणाय एव निर्वाणस्वरूपं प्राप्नुयात् । सावयवपदार्थाः अथवा सङ्घः सर्वविधदुःखनाशकत्वेन तिष्ठति । स्वपरिश्रमद्वारा स्वस्य मुक्तये उपायान्वेषणं कर्तव्यम् इति एतेषां सुवाणी भविष्यति ।

## ९) महायानविचारः :-

महायानसम्प्रदायोऽयं अश्वघोषस्य समये प्रादुर्भूतः । सम्प्रदायस्यास्य प्रवर्तकाः स्वसम्प्रदायस्य महत्त्वदानाय निर्वाणप्राप्तौ स्वयमेव

प्रधानसाधनत्वेन तिष्ठति इत्यतः मतमस्माकं महत् इति विचिन्त्य स्वमतं महायानमिति, स्थविरवादिनां मतं हीनयानमिति च व्याचख्युः। तथा च मौलिकविचारे भेदस्तिष्ठति इति सम्प्रदायद्वयं समुद्भूतम्। महायानसाम्प्रदायिकाः मुख्यतया इमान् सिद्धान्तान् प्रत्यपीपदन् – (१) बोधिसत्वस्य कल्पना (२) षट्पारमिततत्त्वानामनुष्ठानम् (३) बोधिचित्तस्य विकासः (४) आध्यात्मिकभावस्य उन्नतये दश भूमिकाः (५) बुद्धत्वे एव चरमलक्ष्यम् (६) धर्मकायः संयोगकायः तथा निर्णयकायः इति त्रिविधकायाणां कल्पना (७) धर्मशून्यतायाः अथवा धर्मसमतायाः कल्पना इति सप्त । महायानसम्प्रदाये बोधिसत्वस्य कल्पना महद्वैशिष्ट्यं भजते। बोधिसत्त्वस्य शाब्दिकार्थो भवति – बोधौ सत्त्वं अभिप्रायो अस्येति बोधिसत्त्वः इति । यद्यपि स्वाभ्युदयः तथा व्यक्तिगतकल्याणसाधनकरणमेव सम्प्रदायद्वययोरनुष्ठानस्य अन्तिमं उद्देश्यं तिष्ठति तथापि बोधिसत्त्वः संसारस्य सकलप्राणिनां सर्वदुःखान् नाशयित्वा तेषामपि निर्वाणप्राप्तिं कारयन् स्वजीवनमन्येषां लक्ष्योद्देश्येनैव यापयति । संसारेऽस्मिन् वर्तमानानां जनानां मध्ये एकोऽपि मनुष्यः यावत्पर्यन्तं मुक्तिं न लभते तावत् अयमपि बोधिसत्त्वः स्वनिर्वाणसुखभोजने न उद्युक्तो भवति इति हीनयानापेक्षया महायाने विशेषः। अम्नातं च बोधिचर्यावतारे–

एवं सर्वमिदं कृत्वा यन्मयाऽऽसादितं शुभम् ।
तेन स्यां सर्वसत्त्वानां सर्वदुःखप्रशान्तिकृत् ॥
मुच्यमानेषु सत्त्वेषु ये ते प्रामोदसागराः ।
तैरेव ननु पर्याप्तं मोक्षेनारसिकेन किम् ॥ इति

## १०) बौद्धदर्शने विभिन्नाः सम्प्रदायाः :-

दार्शनिकप्रश्नेभ्यः बुद्धस्य उदासीनतायाः कारणात् बौद्धदर्शने अन्यानि बहूनि दार्शनिकमतानि उत्पन्नानि। बुद्धोपदेशेषु ऐहिकवादः प्रतीतिवादः एवं अनुभववादः एतेषां प्राधान्यमासीत् । एवं तत्तद्वाददृष्ट्या बौद्धदर्शनं प्राधान्यमलभत। बौद्धदर्शनं यदा भारतवर्षे अन्यत्र

च प्रसारितमभूत् तदा सर्वत्र अमुं दर्शनमधिकृत्य आलोचनाः सञ्जाताः । अतः बुद्धमतप्रवर्तकाः बौद्धाः स्वधर्मसंरक्षणाय तथा अन्यान् स्वधर्मे आकृष्टुं च विभिन्नेषु मार्गेषु बुद्धस्य मतं परिवर्धयितुं च बद्धपरिकराः अभवन् । यदा दार्शनिकप्रश्नानां समाधानं न दातुं शक्यते तदा बुद्धः मौनव्रतं स्वीकरोति स्म । अस्य अनुयायिनः बुद्धस्य मौने बहुविधां व्याख्यां चक्रुः । केचन दार्शनिकाः बुद्धं अनुभववादी, अन्ये संशयवादी इत्याचक्षन् । बुद्धस्तु अप्रत्यक्षविषयाणां ज्ञानमसम्भवमिति मनुते, अप्रत्यक्षविषयेषु भवति यदि प्रश्नः तदा बुद्धः मौनी भवति । महायानिनः बुद्धस्य मौनविषये अन्यमर्थं व्याचख्युः । एतेषामनुसारं बुद्धः अतीन्द्रियपारिभाषिकसत्तायाः बहिष्कारं न करोति स्म, किन्तु तां सत्तामज्ञेयत्वेन परिगणति स्म इति । तस्य मौनस्य एतदेव तात्पर्यमस्ति यत् सत्तासम्बन्धिज्ञानमवर्णनीयम्, वर्णनातीतत्वात् तस्योत्तरं मौनं भवतीति । साधारणतः प्रत्यक्षवादिनां मतमेतद्— प्रत्यक्षं एकमात्र प्रमाणमिति । अतीन्द्रियं ज्ञानमेतैः नाभ्युपगम्यते । किन्तु बुद्धेनोक्तम् यत् निर्वाणावस्थायां ज्ञानस्योदयो जायते तद् ज्ञानं इन्द्रियातीतमिति । बुद्धेन चरमज्ञानत्वेन प्रज्ञा स्वीकृता । एवं केचन बौद्धदार्शनिकाः बुद्धस्य मौनमाधारीकृत्य रहस्यवादस्य तथा अतीन्द्रियवादस्य चोपपादनमकार्षुः ।

बुद्धस्य परिनिर्वाणानन्तरं बौद्धधर्मे बहवः दार्शनिकमतभेदाः समुत्पन्नाः । फलतः अस्मिन् धर्मे चत्वारः शाखाः मुख्यतया प्रादुर्भूताः । तत्र बाह्यप्रत्यक्षवादी वैभाषिकः, बाह्यानुमेयवादी सौत्रान्तिकः विज्ञावादी योगाचारः, शून्यवादी माध्यमिकः इति ते मतप्रवर्तकाः । शून्यवादविज्ञानवादौ महायानसम्प्रदायान्तर्गतौ, अवशिष्टौ द्वौ हीनयानान्तर्गतौ भवतः । सत्यप्येवं एतद् स्मर्तव्यं यत् महायान-हीनयानान्तर्गतत्वेन बह्व्यः शाखाः सन्ति । तत्र हीनयानान्तर्गतत्वेन एकोनविंशतिशाखाः (२१), महायानान्तर्गतत्वेन अष्टौ (८) शाखाः सन्ति । एतद् गणनातिरिक्तत्वेन अन्या अपि शाखाः अप्रख्याताः भवन्तीति । एवं बौद्धदर्शनं शाखाचतुष्टयेषु वर्गीकृतं सञ्जातम् ।

एतद्विभागात्पूर्वं प्रश्नद्वयं वर्तमानत्वेन तिष्ठति एकः अस्तित्व-सम्बन्धी, अपरः ज्ञानसम्बन्धी इति। अस्तित्वसम्बन्धनामके विषये अयं प्रश्नः- मानसिकं वा बाह्यं वा वस्तु किमपि अस्ति उत न इति। अस्य प्रश्नस्य उत्तरत्रयं मिलिष्यति। माध्यमिकानुसारं – मानसिकं बाह्यं वा वस्तु अस्तित्वं न भजते, सर्वं शून्यम् इति। अतः एते शून्यवादिनः इति प्रथां प्रापुः। योगाचारमतानुसारं – मानसिकावस्थाः विज्ञानधारामाध्यमेन अस्तित्वं भजन्ते, बाह्यवस्तु असत् इति मध्ये पक्षमेकमङ्गीचक्रुः। अतः एते विज्ञानवादिनः इति कथ्यते। अन्ये केचन एवमभिप्रयन्ति— मानसिकं बाह्यं च वस्तु सदिति। एते भवन्ति वस्तुवादिनः। सर्वास्तित्ववादिनः सर्वास्तिवादिनः इति एते वस्तुवादिनः समाम्नायन्ते। सर्वास्तित्वसिद्धान्तः प्रथमतया वैभाषिकेण प्रकाशं प्राप। एतेषां पक्षे सर्वाणि च वस्तूनि अस्तित्वेन स्वीक्रियन्ते। ज्ञानसम्बन्धिविषये अयं प्रश्नस्तिष्ठति - बाह्यवस्तूनां ज्ञानसम्पादनाय किमस्ति प्रमाणम् ? इति। अस्य उत्तरद्वयं मिलिष्यति। ये भवन्ति सौत्रान्तिकाः ते मन्यन्ते – बाह्यवस्तूनां ज्ञानं प्रत्यक्षेण न भवति, तस्य ज्ञानमनुमानद्वारा सिध्यतीति। अन्ये वैभाषिकनाम्ना विख्याताः एवं कथयन्ति - बाह्यवस्तूनां ज्ञानं प्रत्यक्षद्वारा एव मिलिष्यति, न त्वन्येन प्रमाणेन इति।

एवं बौद्धधर्मस्य प्रमुखाः चत्वारः शाखाः विजृम्भन्ते। एतेषां शाखाचतुष्टयेषु पृथक् पृथक् विचारधारा तिष्ठति। पाश्चात्यदार्शनिक-दृष्ट्या एते चत्वारः भिन्नभिन्नत्वेन उल्लेखनीयाः भवन्ति, मतमेतद् समुचितं च। तस्मात् भिन्न भिन्नत्वेन वैभाषिक-सौत्रान्तिक योगाचार माध्यमिकपक्षचतुष्टयं विभक्ताध्यायचतुष्टयेषु निविश्य तेषां पक्षाणां विचारात्मकं स्वरूपविवेचनमिदानीं आरभ्यते।





## ६-१) वैभाषिकदर्शनम् :-

अस्मिन् मते बाह्यमेवं आभ्यन्तरमुमे अपि सत्यत्वेन तिष्ठतः । बाह्यवस्तूनि अस्माभिः प्रत्यक्षं दृश्यन्ते । बाह्यवस्तूनां प्रत्यक्षं ज्ञानमस्माकं मानसिकंप्रतिरूपाणां द्वारा अनुमानेन न लभ्यते । यदि कदापि कस्यापि वस्तुनः प्रत्यक्षज्ञानं न भवति तर्हि तत् कुत्रापि अस्तित्वेन न स्यात् । यतः मानसिकप्रतिरूपाणां द्वारा एव तेषामानुमानिकज्ञानमपि भवेत् । एतन्मतानुसारं सर्वेषां बाह्यवस्तूनां ज्ञानं प्रत्यक्षेणैव सिध्यति । अतः एतेषां वादस्य प्रत्यक्षवादः इति नाम ।

## २) वैभाषिकदर्शनपरिचयः :-

यद्यपि वैभाषिकसौत्रान्तिकौ आभ्यन्तरवस्तूनामेवं बाह्यवस्तूनामस्तित्वं अभ्युपगच्छतः । किन्तु आधुनिकनव्यवादिनां कथनानुसारं एतेऽपि कथयन्ति यत् वस्तूनां ज्ञानं प्रत्यक्ष विना अन्येन न केनापि प्रमाणेन उपायेन वा सिध्यति, अनुमानेऽपि प्रत्यक्षमेव तिष्ठति । दृश्यतामुदाहरणेन – धूमं दृष्ट्वा वह्नेः अनुमानं क्रियते, किन्तु अतीतकाले वह्निधूमयोः एकत्र वर्तमानत्वेन ज्ञानं सम्पादितम् । येन पुरुषेण अनयोः वह्निधूमयोर्ज्ञानमेकत्र न दृष्टम् तेन धूमं–दृष्ट्वा वह्नेरनुमानं कर्तुं न शक्यते । यदि बाह्यवस्तूनां प्रत्यक्षं कदापि नाभूत् चेत्तर्हि केवलमानसिकप्रतिरूपाण्याधारीकृत्य सिद्धिर्न वत्येव । यः कोऽपि कदापि किमपि वस्तु न दृष्टवान् सः एताः मानसिकवस्थाः कस्यापि वस्तुनः प्रतिरूपाः इति वक्तुं न समर्थो भवति । प्रत्युत स तु एवं कथयति यत् मानसिकावस्था एव मौलिकी एवं स्वतन्त्रसता च इति, तस्याः अस्तित्वं कस्मिन्नपि वस्तुनि निर्भरं न तिष्ठति । अतः यदि विज्ञानवादस्य स्वीकारः कर्तव्यः तर्हि एतदपि मन्तव्यं भवति यत् बाह्यवस्तूनां ज्ञानं प्रत्यक्षेणैव सिध्यति । अस्मादेव वैभाषिकमतं "बाह्यप्रत्यक्षवादः" इत्युच्यते । अस्य मतस्योत्पत्तिः मुख्यतः काश्मीरे अभूत् । बाह्यप्रत्यक्षवादिनां वैभाषिकानां मते संसारोऽपि सत्यः, निर्वाणमपि सत्यं भवति इति संक्षिप्तं वैभाषिकदर्शनम् । ●

## दशमोऽध्यायः - सौत्रान्तिकदर्शनम्

### १०-१) सौत्रान्तिकदर्शनम् :-

एतद्दर्शनानुसारं बाह्यमाभ्यन्तरं च सत्यत्वेन वर्णितं भवति । बाह्यदेशे कियन्ति वस्तूनि प्रतीयन्ते यदि तानि सर्वाणि असत्यानि तर्हि कस्यापि वस्तुनः दर्शनार्थं बाह्यवस्तुनः अपेक्षा न कर्तव्या भवेत् मन मन एव तदर्थं पर्याप्तं भवति । किन्तु स्वेच्छया मनः कस्यापि वस्तुनः अवलोकनं न करोति । यद्यपि यत्र कुत्रापि कस्मिन्नपि समये बाह्यवस्तुदर्शने इच्छा स्यात् तथापि तस्य वस्तुनः दर्शनं न सम्भवति । अनेन एतत्सिध्यति यत् बाह्यवस्तुनः दर्शनसमये अस्माकं मनसि यादृशी प्रतीतिः सा न तु कल्पिता, परं तस्यास्तित्वं बहिः स्थितस्य कस्यापि वस्तुनः उपरि निर्भरतां करोति । उदाहरणेन—यदा अस्माभिः कोऽपि वृक्षः साक्षात्क्रियते तदा वस्तुनः वृक्षस्य मानसिकगतः आकारः एव प्रथमतः प्रत्यक्षेण स्वीक्रियते, अनन्तरं च तस्याकारानुसारं मानसिक-प्रतीतेः कारणभूतस्य बाह्यवृक्षस्य अनुमान क्रियते इति सिध्यति । एवमेव बाह्यवस्तूनि अनुमानेन साधयितुं शक्यन्ते । एतेषां वादस्य "बाह्यानुमेयवादः" इति नाम तिष्ठति ।

### २) सौत्रान्तिकदर्शनपरिचयः :-

सौत्रान्तिकः प्रमाणद्वयं मनुते – एकं चितं, अन्यत् बाह्यजगत् । अस्य कथनं भवति यत् बाह्यवस्तुनः अस्तित्वं यदि नाभ्युपगम्यते तर्हि बाह्यवस्तूनां प्रतीतिः कथं भवितुं शक्यते ? इति । यदि प्रतीतिर्न

स्यात् तर्हि वर्तमानस्यास्य वस्तुनः प्रतिपादनं न कर्तुं शक्यते। एवमेव बाह्यवस्तुनः प्रत्यक्षं विना भ्रमवशेन बाह्यवस्तुनः सकाशत्वेनापि मानसिकावस्था प्रतीयते। येन बाह्यवस्तु प्रत्यक्षेण न दृष्टम् तेन मानसिकावस्था एव भ्रमवशेन बाह्यवस्तुसदृशत्वेन प्रतिभाति इति वक्तुं न शक्यते, यथा बन्ध्यापुत्रः। विज्ञानवादिनः अनुसारं बाह्यवस्तु सत्तावत्त्वमेव न भजते इति। सौत्रान्तिकमतानुसारं सत्यमेतद् भवति यत् वर्तमानत्वेन वस्तुनः भावेऽपि तस्मिन् प्रत्यक्षत्वं जायते। किन्तु वस्तु एवं तस्य ज्ञानं च समकालीनत्वेन तिष्ठतः, एव तौ अभिन्नौ इतीयमपि युक्तिः न समीचीना। यतः अस्माकं यदा घटप्रत्यक्षो भवति तदा घटः शरीरात् बाह्यप्रदेशे तिष्ठति, तस्य ज्ञानं तु अन्तस्तिष्ठति इत्ययमनुभवः स्पष्टः। अतः वस्तु ज्ञानाभिन्नत्वेन स्वीकार्यम्। यदि घटमनुष्ययोः न कोऽपि भेदः तर्हि एकेनोच्येत अहं घटः अस्मीति। एवं व्यवहारः न दृश्यते लोके। अन्यदपि कारणं तिस्ठति यदि बाह्यवस्तूनां न किमपि अस्तित्वं तर्हि घटपटालयादिज्ञानेषु अयं घटः अयं पटः इति भेद एव न तिष्ठत्, यतः ज्ञानत्वेन घटपटयोः एकत्वं सिद्धम्। व्यवहारदशायां घट एव पटज्ञानेन न स्वीक्रियते। तस्मात् स्पटं प्रतिभाति - ज्ञानवस्तुनोः वस्तुसम्बन्धी भेदः अवश्यमस्तीति। यथा मानसिकावस्थायाः सत्यत्वं तथा बाह्यवस्तुनः सत्यत्वमपि अवश्यमभ्युपगन्तव्यम्।

ज्ञानस्य कारणचतुष्टयं तिष्ठति। आलम्बनम्, समनन्तरम्, आधिपत्यम्, सहकारिप्रत्ययात्मकमिति तानि चत्वारि। (१) घटादिबाह्यविषयज्ञानस्य कारणमालम्बनम्। यतः ज्ञानस्य आकारः तेनैव उत्पद्यते। (२) ज्ञानस्य अव्यवहितपूर्ववर्तिना मानसिकावस्थया ज्ञाने चैतन्यमागमिष्यति, अतः अस्य नाम समनन्तरमिति। (३) विषयः एवं पूर्ववर्तिज्ञानं सत्वेऽपि विना इन्द्रियेण बाह्यविषयकं ज्ञानं नानुभूयते। कस्यापि विषयस्य ज्ञानं इन्द्रियमाध्यमेनैव भवति, यथा शब्दादिरूपज्ञानं तत्तदिन्द्रियमाध्यमेनैव जायते न त्वन्येन। अतः इन्द्रियाणामधिपतित्वेन ज्ञनमेकं स्वीकार्यम्, एतद् ज्ञानं नियामक-

कारणात्मकमित्युच्यते । (४) एतदतिरिक्तत्वेन आलोक-आवश्यक-दूरत्वाकारादि सहायककारणेभ्योऽपि ज्ञानमुत्पद्यते । एतादृश ज्ञानं सहकारिप्रत्ययात्मकमित्युच्यते । एतैः चतुर्भिः कारणैः संयोगेन कस्यापि वस्तुनः ज्ञानं सम्भवति । अतः ज्ञानस्य आकारं तद्वस्त्वधिष्ठितमेव भवति । विशेषतः एतदत्र वक्तव्यं यत् बाह्यवस्तुनः यः आकारः अस्माभिः दृश्यते, स एव अकारः ज्ञानस्यापि, इमानि ज्ञानानि मनसि एव तिष्ठन्ति इति । बाह्यवस्तुनः ज्ञानं वस्तुजनितमानसिका कारेण अनुमानद्वारा प्राप्यते । अतः एतन्मतं भवति - 'बाह्यानु मेयवादः' इति । मतमेतद् सौत्रान्तिकस्य इति एतदर्थं कथ्यते - सूत्रपिटकमेव अस्य मूलाधारः भवति । दर्शनेऽस्मिन् प्रतिपादितस्यास्य मतस्य प्रतिष्ठाता भवति श्रीकुमारिलभट्टः इति सौत्रान्तिकदर्शनम् ।





## एकादशोऽध्यायः - योगाचारदर्शनम्

### ११-१) योगाचारदर्शनम् :-

अस्य वादस्य प्रवर्तकाः असङ्गवसुबन्धुस्थिरमतिदिङ्नागधर्मपालधर्मशीलशान्तिरक्षितकमलशीलादयः प्रमुखाः विद्वांसः भविष्यन्ति। वादस्यास्य विज्ञानवादः इति नाम। अस्य मतानुसारं सर्वे बाह्यपदार्थाः असत्याः। यद्वस्तु बाह्यत्वेन दरीदृश्यते तत् चित्तस्य प्रतीतिरूपात्मकं भवति। किन्तु चित्तस्य अस्तित्वे न कोऽपि सन्देहः तिष्ठति। यदि चित्तस्य अस्तित्वं न स्यात् तर्हि कथनमेव विरोधात्मकं स्यात्, यतः अयं चित्तस्यैव विचारः भवति। चित्तस्य विचारः चित्तं विना न भवितुं शक्नोति। यदि आभ्यन्तरं किमपि वस्तु न स्यात् तर्हि विचारस्योत्पत्तिरेव न सम्भवेत। अतः चित्तस्य अस्वीकरणेन वदतोव्याघातः समुत्पद्यते। तस्मात् चित्तमेकमस्ति। तच्चित्तमेव विज्ञानमित्युच्यते। मतेऽस्मिन् विज्ञानस्यैव प्राधान्यदानेन अयं "विज्ञानवादः" इति लोके प्रथितयशस्तिष्ठति।

### २) योगाचरदर्शनपरिचयः :-

माध्यमिकमतानुसारं बाह्यवस्तूनामस्तित्वं न मनुते विज्ञानवादी इति प्रागेवावोचाम। किन्तु माध्यमिकाः चित्तस्यापि अस्तित्वं न मन्यन्ते इत्ययं विशेषः तत्र तिष्ठति। भवतु नाम यदि चित्तं मनः वा न भवतः तर्हि कस्यापि विचारस्य प्रतिपादनं न सम्भवेत! यन्मतं मनसः अस्तित्वं नास्तीति, तदानीं स्वयमेव असिद्धतां प्राप्नोति। अतः मतस्य

अथवा विचारस्य सम्भावनाय चित्तस्य स्वीकरणमत्यावश्यकं भवति। बाह्यपदार्थाः चित्तस्य विज्ञानमात्रत्वेन तिष्ठन्ति। विज्ञानस्य यः प्रवाहः तदेव चित्तमित्युच्यते। मनसः बहिर्गतत्वेन ये दरीदृश्यन्ते अन्यान्य-पदार्थाः शरीरं च, एते सर्वे मनसि अन्तर्भूताः भवन्ति। यथा—स्वप्नमतिभ्रमादयः। ज्ञानमेव सर्वत्र सत्तावत्त्वेन तिष्ठति। अतः न केनापि प्रमाणेन सिध्यति ज्ञानभिन्नत्वेन अन्यत् वस्तु सत्यत्वेन स्थास्यतीति। यदि बाह्यवस्तूनां सत्यत्वमङ्गीक्रियते तर्हि बह्व्यः कठिनसमस्याः आगच्छन्ति। किं बाह्यं वस्तु अणुमात्रं भवति उत अणुभ्यः सृष्टम्। यदि अणुमात्रं तर्हि तत्तु सूक्ष्मत्वात् प्रत्यक्षेण दृष्टुं न शक्यते। अथवा अधिकाणुभ्यः निर्मितं वस्तु इत्युच्यते तर्हि सम्पूर्णस्य वस्तुनः प्रत्यक्षोऽपि न सम्भवति। अतः मनसः बाह्यत्वेन कस्यापि वस्तुनः अस्तित्वं यद्यप्यभ्युपगम्येत तथापि तस्य ज्ञानमुत्पद्यते इति कथनमसम्भवमेव इति एका समस्या। द्वितीया तु— वस्तुनः ज्ञानं तावत्पर्यन्तं न भवति यावत् तस्योत्पत्तिरेव न स्यात् इति। अयमपि प्रश्नः कथं सङ्गच्छते। यतो हि वस्तु क्षणिकं तिष्ठति। तस्योत्पत्तेः साकं तस्य नाशोऽपि तिष्ठति। किमपि वस्तु तस्य च ज्ञानं क्षणमेकं तिष्ठति इत्यतः बाह्यवस्तुवादिना एतदपि वक्तुं न शक्यते यत् ज्ञानस्य कारणत्वेन वस्तु अस्तीति। कार्यस्य प्रथमं कारणं तिष्ठति, कार्यकारणौ न समसामयिकौ। वस्तुनाशानन्तरं तस्य प्रत्यक्षं भविष्यति इत्यपि वक्तुं न शक्यते। यतः यदा वस्तु नष्ट भवति, अनन्तरं तस्य प्रत्यक्षत्वं कथं साधयितुं शक्यते। अत बाह्यवस्तूनां ज्ञानसम्भवः नावतिष्ठति। तथाच विचारेण अनेन सिद्धमेतत् ज्ञानातिरिक्तत्वेन वस्तूनामस्तित्वं नास्तीति।

एतन्मतं "विज्ञानवाद." इति प्रथां प्राप। अस्मिन् वादे अस्तित्वेन विज्ञानमेकमेव तिष्ठति। यद्वस्तु बाह्यत्वेन प्रतीयते तत् यथार्थेन मानसप्रत्यक्षात्मकं भवति। मनस्तु प्रवाहरूपेण तिष्ठति, अस्मिन् प्रवाहे अतीतानुभवस्य संस्कारस्तिष्ठति। यस्मिन् समये यस्य संस्कारस्य परिस्थितिरनुकूला भवति तस्मिन् समये तस्य संस्कारस्य

प्रादुर्भावः भवति। अतः एतद्वक्तुं शक्यते यत् मतेऽस्मिन् संस्कारस्यास्य परिपाको भवतीति। फलतः यस्मिन् समये यादृशः संस्कार तादृशं ज्ञानं समुत्पद्यते। एवमेव विशेषसमये विशेषप्रकारात्मकं ज्ञानं प्रादुर्भवति। एतद् स्मृतिदृष्टान्तानुसारं स्पष्टोभवति। यद्यपि इदानीमस्माकं मनसि अनेके संस्काराः निहिताः सन्ति तथापि एते सर्वे विशेषसमये विशेषसंस्कारवत्वेन स्मृतिसम्भवं प्राप्नुवन्ति। आलयविज्ञानत्वेन मनः उच्यते। यतः मनसि एव विभिन्नविज्ञानानि तिष्ठन्ति। अस्मिन् सर्वाणि ज्ञानानि बीजरूपेण तिष्ठन्ति। अतः अन्यदर्शनानुसारमस्मिन्नपि मते आत्मा अस्ति। किन्तु मनसि एवमात्मनि अस्ति महान् भेदः। आत्मा यथा अपरिवर्तनशीलः नित्यश्च तथा आलस्यविज्ञानमिति वक्तुं न शक्यते। मनस्तु परिवर्तनशीलचितवृतीनां एकं प्रवाहात्मकम्। अभ्यासेन एवमात्मसंयमद्वारा आलयविज्ञान वशीकृत्य अनेन वशीकृतेन मनसा विषयज्ञानस्योत्पत्तिमवरोद्धुं शक्यते। एवं विषयज्ञानाभावे मनः निर्वाणप्राप्तये प्रयत्नं करोति। आत्म-संयमस्य तथा योगाभ्यासस्य च मार्गानुसरणं यदि न क्रियेत तर्हि तृष्णाभूतेभ्यः आसक्तिभ्यः मुक्तिर्न मिलिष्यति। फलस्वरूपेण काल्पनिकबाह्यजगतः बन्धनमपि न नष्टं भवति, पुनश्चासक्तिः वर्धते। केवल विज्ञानमेव स्वतन्त्रतया परिनिष्पन्न भवति। अस्मिन् विज्ञाने जगत् आधारितमस्ति, अतः अयं प्रपञ्चः परतन्त्रः। यथा रज्जुसर्पस्वप्नदृष्टान्तादयः जगतः वस्तु आधारीकृत्य परिकल्पिताः तथा ज्ञानमाधारीकृत्य अय प्रपञ्चः तिष्ठति।

योगाचारः इति पदस्य अर्थद्वयं तिष्ठति। तत्र प्रथमः - आलय-विज्ञानस्य अस्तित्वप्रतिपादनाय योगस्य आचरणम् इति योगाचारः। अर्थात् बाह्यजगतः काल्पनिकतायाः समीचीनज्ञानसम्पादनाय योगस्य अभ्यासः क्रियते। द्वितीयस्तु अय भवति - योगश्चासौ आचारश्च योगाचारः इति। योगस्य तात्पर्यम् - जिज्ञासा, आचारः सदाचारः इति। एवं भवति सक्षिप्तं योगाचारदर्शनम्।



३) आत्मस्वरूपविवेचनम् ,-

विज्ञानमेव आत्मा इत्युच्यते । सः एव विज्ञानस्वरूपः आत्मा आध्यात्मिकदेहाद्याकारे अहमित्यनुभवेन भासते । मतेऽस्मिन् ज्ञानं संस्कारत्वेन तिष्ठति, सापेक्षात्मकं ज्ञानं प्रतिभासते इति युक्तियुक्तमेव । अस्यामवस्थायां जीवाऽत्मनि या प्रादेशिकत्वस्थूलत्वादीनां प्रतीतिर्जायते सेयं प्रतीतिरुत्पन्ना भवति । अर्थात् प्रादेशिकत्वादयः नोत्पद्यन्ते । एवं शरीरावयवच्छेदेन आत्मनि छेदः न जायते । अत्र कारणमेतद् भवति विज्ञानं प्रतिक्षणं विभिन्नत्वेन भासते । अर्थात् यस्मिन् समये शरीरसंस्थानं तिष्ठति तस्मिन् समये तादृशं विज्ञनं भासते । विज्ञानावयवाः शरीरावयवसदृशत्वं प्राप्नुवन्ति । विज्ञानस्य विशुद्धावयवः कोऽपि नास्ति । यस्योत्पत्तिः अवयवान्तराधीना न भवति सः विशुद्धावयवः इत्युच्यते । मतेऽस्मिन विज्ञानावयवस्योत्पत्तिः शरीरावयवाधीना इत्यतः अयं न शुद्धः । मूर्तपरमाणूनां सङ्घातस्य नाम शरीरमिति, यदान्तरं विज्ञानं तत पञ्चस्कन्धानां समवायत्मकं भवति । तदपि कल्पनामयस्वप्नवस्तुतुल्यमस्ति । अनेन कारणेन अवयवः पृथगिति न सिध्यति । एवं क्षणभङ्गुवादिनामस्मिन् मते नित्यत्वेन स्थिरत्वेन च न किमपि वस्तु तिष्ठति । एवमेते "क्षणिकविज्ञानमात्मा" इति आत्मस्वरूपं प्रतिपादयन्ति ।





## द्वादशोऽध्यायः - माध्यमिकदर्शनम्

### १२-१) माध्यमिकदर्शनम् :-

एतद्दर्शनं शून्यवादिनां कृते भवति । एतन्मतानुसारं दृष्टिगोचरत्वेन प्रपञ्चे ये ये पदार्थाः ते सर्व एव असत्तात्मकाः असद्रूपाश्च भविष्यन्ति । तथा च संसारः शून्यत्वेन तिष्ठति । बाह्यत्वेन एवमान्तरत्वेन च सन्ति ये विषयाः एतेषां व्यवहारः अवस्तुनिष्ठः । अतः एव अस्य मतस्य "शून्यवादः" इति सञ्ज्ञा ।

### २) माध्यमिकदर्शनपरिचयः :-

शून्यवादस्य प्रवर्तक नागार्जुनः । द्वितीयशताब्द्यां दक्षिणभारतस्य एकस्मिन् ब्राह्मणकुटुम्बे अस्य जन्म आसीत् । बुद्धचरितप्रणेता अश्वघोषोऽपि वादस्यास्य समर्थकः । नागार्जुनस्य मूलमाध्यमिककारिका एव आधारशिला भवति शून्यवादस्य । आर्यदेवस्य चतुःशतिका अपि अस्मिन् वादे मुख्यो ग्रन्थः । वर्षेऽस्मिन् भारते बौद्धेतरदार्शनिकाः शून्यवादात् अंशममुं स्वीकृतवन्तः यत् संसारः शून्यमयः,अर्थात् कस्यापि वस्तुनः अस्तित्वं नास्तीति । विचारममुं समर्थयन् श्रीमान् माधवाचार्यः स्वसर्वदर्शनसंग्रहे युक्तिमिमां प्रकटितवान् - ज्ञाता, ज्ञेयम् ज्ञानम् इमानि त्रीणि परस्पराश्रितानि भवन्ति । एकस्य अस्तित्वमवशिष्टयोर्द्वयोर्मध्ये तिष्ठति । यदि एकस्य असत्वमागतं अवशिष्टौ द्वावपि असद्भूतौ इति सिध्यतः । यथा– रज्जुसर्पदृष्टान्तः । एतद् दृष्टान्तानुसारं प्रतीयते यत् स्वप्नप्रपञ्चवत् ज्ञाता ज्ञानं ज्ञेयं च इमानि सर्वाणि असद्भूतानि इति । एवमस्माभिः साक्षात्क्रियते - सर्वेषां वस्तूनां बाह्याभ्यन्तरत्वेन



सत्तावत्त्वं नास्ति, अतः संसारः असत्यः इति । भारतीयदर्शनेषु तत्र तत्र अस्य शून्यवादस्य 'सर्ववैनासिकवाद' इत्युल्लेखः कृतः । यतः एतन्मतानुसारं कस्यापि वस्तुनः सत्ता नास्ति । किन्तु यदि सम्यगालोच्य विचारिते सति तर्हि माध्यमिकमतमेतत् न वैनाशिकवादः इति सिध्यति । अस्मिन् मते इन्द्रियप्रत्यक्षेण जगतः असत्यत्वमुपकल्पितं भवति ।

प्रत्यक्षजगतः अपेक्षया एका अस्ति पारमार्थिकी सत्ता । इयं सत्ता अवर्णनीया । अस्याः सम्बन्धे न किमपि वक्तुं शक्यते यत् इयं मानसिकी बाह्या वा इति । साधारणलौकिकजनानां विचारानुसारमवर्णनीयत्वात् इयं शून्यत्वेन भण्यते । किन्तु अस्याः पारमार्थिकसत्तायाः वर्णनं नकारात्मकं भवति । यत्सत्यं तन्निरपेक्षम् । निरपेक्षं स्वस्य अस्तित्वसम्पादनाय कस्यापि वस्तुनि न निर्भरतां प्राप्नोति । साधारणतः अस्माभिः कियन्ति वस्तूनि साक्षात्क्रियन्ते तानि सर्वाणि यस्मिन् कस्मिन्नपि वस्तुनि निर्भरत्वेन तिष्ठन्ति । अतः इमानि वस्तूनि न सत्यत्वेनाभ्युपगम्यन्ते । एवमेतेषां वस्तूनामसत्यत्वमपि वक्तुं न शक्यते । यदि इमानि आकाशकुसुमवत् सर्वथा असद्भूतानि तर्हि एतेषामस्तित्वं प्रत्यक्षेण नानुभूयते, प्रपञ्चस्तु अनुभूयत एव । अतः आकाशकुसुमवत् न अप्रत्यक्षः अयं प्रपञ्चः । अस्मिन् सत्यत्वमप्यस्ति एवमसत्यत्वमपि च । अयं प्रश्नः उदेति यत् सत्यमपि नास्ति, असत्यमपि नास्ति इत्ययं व्यवहारः सर्वथा विरुद्धो भवतीति । विचारस्यास्य समाधानाय पारमार्थिकसत्तायाः अवर्णनीयत्वं प्रतिपादितम् । वर्णनातीतत्वस्य शून्यवादः इति व्यवहारः । वस्तूनां यथार्थस्वरूपं सत्येन, असत्येन वा अथवा सदसत्त्वेन उत सदसद्भिन्नेन इति निश्चेतुं न शक्यते । वस्तूनां स्वरूपं कोटिचतुष्टयरहितमित्यतः शून्यम् इत्युच्यते । यदि शून्यं तर्हि तस्य पारमार्थिकं स्वरूपमवर्णनीयं भवति । अस्याः अवर्णनीयतायाः प्रमाणयितुमेव प्रतीत्यसमुत्पादः बुद्धेनाभिहितः । नागार्जुनस्य कथनं भवति प्रतीत्यसमुत्पादः शून्यत्वं बोधयतीति । वस्तूनां कोऽपि धर्मः

नास्ति, यस्योत्पत्तिः अन्यस्योपरि न तिष्ठेत् । अर्थात् कियन्तः धर्माः सन्ति ते सर्वे शून्यात्मकाः। अनेन विचारेण एतत् स्पष्टीक्रियते यत् वस्तूनां परावलम्बनम्, तेषां निरन्तरपरिवर्तनशीलतां, तेषामवर्णनीयतामेव शून्यमिति वदन्ति ।

मतममु मध्यममार्गः इत्युच्यते, यतः एतत् एकान्तिकमतेभ्यः भिन्नम् । अस्मिन् मते वस्तूनां सर्वथा निरपेक्षत्वं एवमात्मनिर्भरता चाङ्गीक्रियते, एवमेव वस्तूनां सम्पूर्णतया असत्यत्वमपि प्रतिपाद्यते। शून्यवादस्य माध्यमिकत्वमेतदर्थमुच्यते यत् अयं वादः प्रतीत्यसमुत्पादेनैव उत्पन्नः । परनिर्भरत्वेन वस्तूनां स्वभावः अर्थात् स्वस्वरूपमवर्णनीयत्वेन तिष्ठति । केचन मतममु सापेक्षवादत्वेनापि व्यवहरन्ति । वस्तूनां प्रत्येकतया विशिष्टो धर्मः अन्यवस्तूनामुपरि निर्भरो भवति । अतः तस्यास्तित्वमेव तेभ्यः वस्तुभ्यः अपेक्षितं भवति । सापेक्षवादानुसारं कस्यापि वस्तुनः विषयस्य च स्वत्वेन किमपि निश्चितत्वम्, निरपेक्षत्वम्, तथा स्वतन्त्रस्वभाववत्वं नास्ति । वादेऽस्मिन् प्रपञ्चविचारेण सह पारमार्थिकसतासम्बन्धिविचारोऽपि क्रियते । एतेषां कथनमस्ति यत् बुद्धस्य प्रतीत्यसमुत्पादः अथवा अनित्यवादः केवलं दृश्यमानप्रपञ्चस्य प्रतिपादनार्थं आरब्धोऽस्ति, यं वयं प्रत्यक्षद्वारा अभ्युपगच्छामः । अत्र एकः प्रश्नः उदेति-यैः संस्कारैः इन्द्रियज्ञानमुत्पद्यते, निर्वाणदशायां तेषां यदा निरोधो जायते तदा कादृशः अनुभवः स्यास्यति ? इति । अस्योत्तरं भवति - तस्मिन् समये या अनुभूतिः सा न सापेक्षा भवति । अतः माध्यमिकाः वदन्ति-सा अनुभूतिरेव पारमार्थिकी, या दृश्यवस्तूनां परा, नित्या, निरपेक्षा एवं साधारणधर्मैः रहिता च भवति । नागार्जुनमतानुसारं सत्यद्वयं तिष्ठति – एका संवृत्यात्मिका, अन्या पारमार्थिकी चेति । संवृत्तिसत्यं तिष्ठति साधारणजनानां कृते । उतमानां कृते पारमार्थिकी तिष्ठति । पारमार्थिकसत्यप्राप्तये संवृत्तिसत्यं साधनं भवति । निर्वाणावस्था साधारणव्यावहारिकावस्थापेक्षया भिन्ना । निर्वाणाप्राप्त्यनन्तरं मनुष्यः साधारणव्यावहारिकनामरूपभ्यः उपरि गमिष्यति । अतः एव इयमवस्था केवलं नकारात्मकवर्णनया

साध्यते । नागार्जुनस्य कथनानुसारं - साधारणोपायेभ्यः अविदितत्वेन यदज्ञातं, तस्य प्राप्तिर्न भवति, अर्थात् सदेव प्राप्तिमस्ति, तस्य विनासो नास्ति यत् नित्यमपि नास्ति, यन्निरुद्धं न भवति यस्य उत्पतिरपि नास्ति तादृशी अवस्था निर्वाणावस्था भविष्यति । निर्वाणस्य तथाभूतस्वरूपं यः जानाति सः तथागतः इत्युच्यते । तथागतस्य स्वरूपमपि वर्णयितुं न शक्यते ।

## ३) अध्यासविवेचनम् :-

शून्यवादिनां माध्यमिकानां कथनमस्ति यत् इदं रजतमित्यत्र रजतस्य यः भ्रमः शुक्तिकायां भविष्यति, तस्य भ्रमस्य आलम्बनं शून्यमेव भवति अर्थात् किमपि सत् नास्तीति । एतेषां मते परमार्थवस्तुत्वेन शुक्तिरिति एकः पदार्थः नास्ति, किन्तु शून्यमेवास्ति । इदं रजतमित्यत्र रजतभ्रमस्यालम्बनं असदेव भवति इति सिध्यति । शून्यवादिनां कथनमस्ति यत् असत्प्रकाशनशक्तिमति या वासना सा स्वयं असत्स्वरूपा सती अपि सत्सदृशत्वेन भासते इति । अयं प्रकाशः अनादिकालादारभ्य निरन्तरं धाराप्रवाहरूपेण चलन् आगच्छति । असत्प्रकाशनशक्तिमति या वासना सा असद्विज्ञानमपि सत्सदृशत्वेन प्रकाशयति, एवं स्वसत्त्वीं असत्प्रकाशनशक्तिमपि प्रकाशयति । अस्याः वासनायाः विज्ञाने या अस्ति असत्प्रकाशनाशक्तिः सा एव स्वप्नदृष्टान्ते सिध्यति । येन प्रकारेण स्वप्नदशायां असत्पदार्थस्यैव भानं भविष्यति, एवमेव संसारदशायां असत्पदार्थस्यैव सदा भानमवतिष्ठते । अस्याः असत्प्रकाशनशक्तेः एव अविद्या अथवा संवृत्तिरित्युच्यते । अतः एव असत्प्रकाशनशक्तिमत्या अविद्यया एव असद्रूपः यः प्रपञ्च सः एव सत्सदृशत्वेन भासते इति अध्यासविचारः ।

तथा च माध्यमिकदर्शने सत्यद्वयं तिष्ठति-संवृत्ति - पारमार्थिकेति । प्रपञ्चस्य असत्यत्वं मन्यते । पारमार्थिकसत्यस्य नकारात्मकवर्णनं क्रियते । निर्वाणावस्था पारमार्थिकसत्यस्यानुभूतिरिति स्वीक्रियते । सामान्यतः एतेषां विचाराणां सहयोगः अद्वैतवेदान्तदर्शनेऽपि मिलिष्यति । भवति चैवं माध्यमिकदर्शनम् ॥

## ११) बौद्धधर्मस्य वेदबाहिरता :-

प्रकृतमनुसरामः। केचन विद्वांसः बौद्धधर्मस्य उपनिषन्मार्गात् नितान्तपृथक्त्वेन मन्यन्ते। यतः बुद्धेन यज्ञादिकर्मकाण्डस्य समधिकनिन्दा कृता। तस्मात् सः अवैदिकः इति मत्वा तस्य सिद्धान्तः सर्वथा वेदविरुद्धः इत्यङ्गीक्रियते। वेदोक्तेश्वरे अस्य प्रामाण्याभावात् दर्शनस्यास्य नास्तिकत्वमागतम्। यद्यपि अनेन ईश्वरस्यास्तित्वं देवादिपूजादयः खण्डिताः तथापि बुद्धेन अनेकाः उपनिषच्छ्रुतयः स्वमतदार्ढ्याय स्वीकृताः। यथा - तद्ध एक एवाहुः असदेवेदमग्र आसीत् तस्मादसतः सज्जायते (छा० उ० ६-२-१) इत्यादयः। आश्रमचतुष्टयेषु अन्यतमान्तिमत्वेन यः अस्ति संन्यासः सः बुद्धेनापि मुख्यत्वेन स्वीकृतः। सः एव आत्मज्ञाने आत्मज्ञानोपदेशे च अधिकारी इति बुद्धेन निर्णीयते।

एतदत्र चिन्तनीयं भवति यत् आस्तिकैः पूर्वपक्षत्वेन सिद्धान्तःविरोधत्वेन च याः श्रुतयः परिगणिताः सन्ति ताः श्रुतीः बुद्धेन मुख्यत्वेन स्वीकृत्य तासां श्रुतीनामुपरि स्वसिद्धान्तः समुपस्थापितो भवतीति।

## १२) आत्मनि पुर्नविश्वासः :-

महायानपन्थानुसारं पारामार्थिकत्वेन एकः आत्मा अस्ति, तस्यात्मनः मिथ्या नास्तीति महायानिकाः प्रतिपादयन्ति। प्राचीनबौद्धदर्शने हीनयाने तु आत्मनः अस्तित्वं न मन्यते। अतः साधारणमनुष्यस्य इयंमाशङ्का अशान्तिश्च समुत्पन्ना – यदि आत्मनः अस्तित्वं नास्ति तर्हि कस्य मुक्तिः ? कथं वा सा भविष्यति इति। महायानानुसारं केवलहीनात्मनः मिथ्यात्वमुपकल्प्यते। एवं यदा हीनात्मस्थाने महात्मनः अस्तित्वं स्थापितं भवेत् तदा महायानिषु आशायाः पुनसञ्चारः तिष्ठति। वर्त्तमानसमये हीनयानमहायानयोर्मध्ये परस्परविरोधो वर्तते।

## १३) बौद्धमते मोक्षस्वरूपविचारः :-

अन्यदार्शनिकेषु उच्यते यः मोक्षः सः बौद्धमते निर्वाणमित्यभिधीयते । बुद्धस्य विचारदृष्ट्या ज्ञानप्राप्तिः निर्वाणमिति भण्यते । विच्छिन्नप्रवाहरूपादुत्पन्नना मरूपतृष्णायाः वशीभूतत्वेन या जीवनप्रवाहरूपात्मकत्वेन सन्ततं गतिशीला, तस्याः प्रवाहात्मकगत्याः विच्छदप्राप्तिरेव निर्वाणमित्युच्यते । यथा – ज्वलनात्मके दीपे यदा तैलसमाप्तिर्भवति तदा स्वयमेव सः दीपः शान्तो भूत्वा अस्तं गमिष्यति एवमेव कामादिभागात्मकपुनर्जन्मादि नित्यत्वेन वर्तमानानामात्माश्रवादीनां क्षयानन्तरं पुनः तस्य जीवस्य संसारबन्धने अर्वागागमनं नष्टं भवति । यत्र तृष्णा सम्पूर्णा नष्टा भवति, एवं भोगाद्याश्रवाणां किमपि अस्तित्वं न तिष्ठति, तस्याः अवस्थायाः एव भगवान् बुद्धः निर्वाणमिति संज्ञा कृतवान् । इति संक्षिप्तं बौद्धदर्शनम् ।। इति शम् ।।










**Dr. P. S. Hebbar.**

The writer of this book belongs to South Kanara Udupi Taluk, Parampalli Village, **Karnataka**. He come from respected Brahmin family and his ancesters were great Samskrit Scholars. So Samskrit's blood flows in him also. He learnt Samskrit from his childhood, took full knowledge in Rig - Veda from his father up to 1962, then went to Madras to take education in Adwaita Vedanta in Mylapoor Samskrit College. After that he got **Siromani** degree from Madras University. He researched from 1970 to 72 in Kendreeya Samskrit Vidyapeetha, Tirupati and acquired **Vidyavaridhi ( Ph, D. )** from Varanasey Samskrit University for the thesis "ऋग्वेदे अद्वैत-सिद्धान्तानां समीक्षगम्" In between 1974-76 he worked **Vidyavachaspati (D, Litt )** degree and worte thesis on 'तैत्तिरीयसंहितायाम् अद्वैतसिद्धान्तानां समीक्षणम्'. He also worked as Research Assistant in S. V. Universit, Tirupati under Sankar kosa project and it was completed under his great service. In 1978 he was part-time lecturer in K. S. Vidyapeetha, Tirupati and now he is giving his service as Lecturer in "Adwaita Vedanta" in Sri Sadasiva Kendriya Samskrit Vidyapeetham Puri. **DWADASHA DARSHANA SAMEEKSHANAM** is the frist book coming from him and he believes that it may be usefull to be all Samsk it students. ●